द्वादशहस्तं प्रकुर्वीत चित्तमण्डलमुत्तमम् ।
चतुरस्रं चतुर्द्वारं चतुष्कोणं प्रकल्पयेत् ॥
तस्याभ्यन्तरतश्चक्रमालिखेत्परिमण्डलम् ।
मुद्रान्यासं[1] ततः कुर्यात् विधिदृष्टेन कर्मणा ॥
तस्य मध्ये लिखेत् वज्रमिन्द्रनीलसमप्रभम् ।
पंचशूलं महाज्वालं भयस्यापि भयङ्करम् ॥
पूर्वेण तु महाचक्रं वज्रज्वालाविभूषितम् ।
दक्षिणेन महारत्नं स्फुलिङ्गगहनाकुलम्[2] ॥
पश्चिमेन महापद्मं पद्मरागसमप्रभम् ।
उत्तरेण महाखड्गं रश्मिज्वालाकुलोज्ज्वलम्[3] ॥
पूर्वकोणे लिखेन्नेत्रं मेघमध्य[4]समप्रभम् ।
दक्षिणेन ततो वज्रं मामकीकुलसम्भवम् ॥
पश्चिमेन लिखेत्पद्मं सकन्दं विकचाननम्[5] ।
उत्तरेणोत्पलं कुर्यान्नीलाभ्रमिव शोभनम् ॥
आलिखेत् पूर्वद्वारे तु मुद्गरं ज्वालसुप्रभम् ।
दक्षिणेनालिखेद्दण्डं वज्रज्वाला[6]दिसुप्रभम् ॥
पश्चिमेनालिखेत्पद्मं खड्गज्वालाप्रभाकरम् ।
उत्तरेण लिखेद्वज्रं वज्रकुण्डलिवज्रिणाम् ॥
परिस्फुटं तु विज्ञाय[7] मण्डलं चित्तमुत्तमम् ।
पूजां कुर्वीत यत्नेन कायवाक्चित्तपूजनैः ॥

1. A °योगं° । 2. A °नादकेवलम् । 3. A °कुलं लिखेत्, B °कुलाकुलम् । 4. B °न्नेत्रं मेघसङ्घ° । 5. A °नलम् । 6. A °द्वारा° । 7. A °टाख्यो विज्ञानं ।

षोडशाब्दिकां संप्राप्य योषितं कान्ति[1]सुप्रभाम् ।
गन्धपुष्पाकुलां[2] कृत्वा तस्य मध्ये तु कामयेत् ॥
अधिवेष्टा च तां प्रज्ञां[3] मामकीं गुणमेखलाम् ।
सृजेद्बुद्धपदं सौम्यमाकाशधात्व[4]लङ्कृतम् ॥
विण्मुत्रशुक्ररक्तादीन् देवतानां निवेदयेत् ।
एवं तुष्यन्ति सम्बुद्धाः बोधिसत्त्वा महाशयाः ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे गुह्यकायवाक्चित्तमण्डलपटलश्चतुर्थोऽध्यायः ।

1. BC कान्ति° । 2. A °पुष्पकचलो । 3. A समधिष्य च तां प्राज्ञः, B अधिवेष्टेच्च । 4. B °वट° ।

अथ भगवान् सर्वतथागतकायवाक्—

चित्तवज्रधरो राजा सर्वाग्रो भुवनेश्वरः ।
धर्मचर्याग्रधर्मार्थी[1] भाषते चर्यलक्षणम् ॥
निर्विकल्पार्थसम्भूतां रागद्वेषम[2]हाकुलाम् ।
साधयेत्[3] प्रवरां सिद्धिमग्रयाने[4]ह्यनुत्तरे[5] ॥
चण्डालवेणुकाराद्या मारणार्थार्थचिन्तकाः ।
सिधान्ति अग्रयानेऽस्मिन् महायाने ह्यनुत्तरे ॥
आनन्तर्यप्रभृतयः[6] महापापकृतोऽपि च ।
[7]सिध्यन्ते बुद्धयानेऽस्मिन् महायानमहोदधौ ॥
आचार्यनिन्दनपरा नैव सिध्यन्ति साधने ।
प्राणातिपातिनः सत्वा मृषावादरताश्च ये ॥
ये परद्रव्याभिरता नित्यं कामरताश्च ये ।
विण्मुत्राहारकृत्या ये[8] भव्यास्ते खलु साधने ॥
मातृभगिनीपुत्रींश्च कामयेद्यस्तु साधकः ।
स सिद्धिं विपुलां गच्छेत् महायानाग्रधर्मताम्[9] ॥
मातरं बुद्धस्य विभोः कामयन्न च लिप्यते ।
सिध्यते तस्य बुद्धत्वं निर्विकल्पस्य धीमतः ॥

1. A ° र्थी । 2. AB ° मोहा ° । 3. AC ° यन्ति । 4. C ° घोर ° । 5. B ° त्तमम् । 6. A ° भूतस्य, B adds सत्त्वा । 7. A substitutes तेऽपि सर्वतः सिद्धन्ति महायानाग्रसाधने for this line. 8. A ° कृत्यार्थी, C ° कृत्यार्था । 9. A ° धर्मेषु ।

अथ खलु सर्वनिवरणविष्कम्भिप्रभृतयो महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ताः। किमयं भगवान् सर्वतथागतस्वामी सर्वतथागतपर्षन्मण्डलमध्ये दुर्भाषितवचनोदाहारं[1] भाषते। अथ ते[2] सर्वतथागताः सर्वनिवरणविष्कम्भिप्रभृतीनां महाबोधि[3]सत्त्वानां आश्चर्यवचनमुपश्रुत्यैतान् बोधिसत्त्वानेवं आहुः—

अलं[4] कुलपुत्रा मा एवम् वोचत[5]।

इयं सा धर्मता शुद्धा बुद्धानां सारज्ञानिनाम्।
सारधर्मार्थसम्भूता एषा[6] बोधिचरि[7]पदम्॥

अथ खल्वनभिलाप्यानभिलाप्य[8]बुद्धक्षेत्रपरमाणुरजःसमा बोधिसत्त्वा[9] भीताः सन्त्रस्ता[10] मूर्च्छिता अभूवन्। अथ भगवन्तः सर्वतथागतास्तान् सर्वबोधिसत्त्वान् मूर्च्छितान् दृष्ट्वा भगवन्तं सर्वतथागतकायवाक्चित्ताधिपतिमेवमाहुः। उत्थापयतु भगवन्नेतान् महाबोधिसत्त्वान्।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः आकाशसमताद्वयवज्रं नाम समाधिं समापन्नः। समनन्तरसमापन्नस्य च भगवतः सर्वतथागतकायवाक्चित्तवज्रा[11]धिपतेः प्रभया स्पृष्टमात्रा[12] अथ ते बोधिसत्त्वाः स्वेषु स्वेष्वासनस्थानेषु[13] स्थिता अभूवन्। अथ ते सर्वतथागता आश्चर्यप्राप्ता अद्भुतप्राप्ताः प्रीत्योद्बिल्यप्रायाः[14] एवं[15] धर्मघोषमकार्षुः।

1. B °दाहरणं। 2. BC omit. 3. A omits महाबोधि°। 4. A एवं। 5. A एवमेतदवोचत। 6. A एव। 7. A °सत्त्वनवो°। 8. A °प्ये। 9. A adds महासत्त्वा। 10. A समन्तात्। 11. C omits °वज्र°। 12. A °मात्रया°। 13. B °सनेषु। 14. BC °प्राप्ताः। 15. C adds धर्माणां।

अहो धर्म अहो धर्म अहो धर्मार्थसम्भव ।
धर्मशुद्धार्थनैरात्म्य वज्रराज[1] नमो नमः ॥
कायवाक्चित्तसंशुद्ध[2] आकाशसमतालय ।
निर्विकार निराभास वज्रकाय नमो नमः ॥
चित्तं ताथागतं श्रेष्ठं त्रैयध्व[3]पथवर्त्तिनम् ।
धातुभूत महाकाश[4] आकाशार्थ नमो नमः ॥
आकाशकायसम्भूत आकाशवाक्प्रवर्त्तक ।
आकाशचित्तधर्माग्र चर्यापद नमोऽस्तु ते ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समन्तचर्याग्रपटलः पञ्चमोऽध्यायः ।

1. A धर्मै°। 2. C °भूत। 3. A त्रियध्व°। 4. A चार्त्तैचड़ामहाचित्त।

## षष्ठः पटलः ।

अथ खलु अक्षोभ्यवज्र[1]स्तथागतः सर्वतथागतकायवाक्चित्तगुह्यवज्रं नाम समाधिं समापद्येदं चित्ताधिष्ठानमन्त्रमुदाजहार ।

॥ ओं सर्वतथागतचित्तवज्रस्वभावात्मकोऽहम् ॥

अथ भगवान् वैरोचनवज्रस्तथागतो विरजपदवज्रं नाम समाधिं समापद्येदं कायाधिष्ठानमन्त्रमुदाजहार ।

॥ ओं सर्वतथागतकायवज्रस्वभावात्मकोऽहम् ॥

अथ भगवानमितायुर्वज्रस्तथागतः सर्वतथागतसमता[2]द्वयवज्रं नाम समाधिं समापद्येदं वागधिष्ठानमन्त्रमुजहार ।

॥ ओं सर्वतथागतवाग्वज्रस्वभावात्मकोऽहम् ॥

त्रिवज्रं ताथागतं शुद्ध[3] पदं पदविभावनम् ।
निष्पादयेदेभिः[4] प्रवरैः मन्त्रलक्षणलक्षितम्[5] ॥

अथ भगवान् रत्नकेतुवज्रस्तथागतः ज्ञानप्रदीपवज्रं नाम समाधिं समापद्येदं अनुरागण[6]मन्त्रमुदाजहार ।

॥ ओं सर्वतथागतानुरा[7]गणवज्रस्वभावात्मकोऽहम् ॥

अथ भगवानमोघसिद्धिवज्रस्तथागतोऽमोघवज्रं नाम समाधिं समापद्येदं पूजा[8]मन्त्रमुदाजहार ।

॥ ओं सर्वतथागतपूजावज्रस्वभावात्मकोऽहम् ॥

1. BC omit °वज्र°। 2. C °गतासमया°। 3. B °तगुह्य°। 4. A °भिर्मन्त्र°। 5. A °वर्जितम्। 6. BC omit. 7. C °गतरा°। 8. BC omit.

पञ्चकामगुणैर्बुद्धान्[1] पूजयेद्विधिव[2]त्सदा ।
पञ्चोपहारपूजाभिर्लघु बुद्धत्वमाप्नुयात् ॥

इत्याह भगवान् सर्वतथागतकायवाक्चित्तवज्राधिपति-र्वज्रधरः ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्राधिपतिर्वज्रधर[3] इदं सर्वतथागतमन्त्ररहस्यमुदाजहार ।

॥ ओं सर्वतथागतकायवाक्चित्तवज्रस्वभावात्मकोऽहम् ॥

मन्त्रनिध्यप्तिकायेन वाचा मनसि चोदितः ।
साधयेत् प्रवरां सिद्धिं मनः[4]सन्तोषणप्रियाम् ॥
चित्तनिध्यप्तिनैरात्म्यं वाचा कायविभावनम् ।
निष्पादयन्ति[5] संयोगमाकाशसमतालयम् ॥
कायवाक्चित्तनिध्यप्तेः स्वभावो नोप[6]लभ्यते ।
मन्त्रमूर्त्तिप्रयोगेण[7] बोधिचित्ते च[8] भावना ॥
विचार्येदं समासेन[9] कायवाक्चित्तलक्षणम् ।
भावयेत् विधिसंयोगं समाधिं मन्त्रकल्पितम् ॥
अथ वज्रधरः श्रीमान् सर्वताथागतान्वितः ।
सर्वबुद्धाग्रसर्वज्ञो भाषते भावनोत्तमम् ॥
आकाशधातुमध्यस्थं भावयेच्चन्द्रमण्डलम् ।
बुद्धबिम्बं विभावित्वा सूक्ष्मयोगं समारभेत् ॥

1. A गुणेनैव । 2. C ° विधिना । 3. A भगवन्त । 4. A सन्तः । 5. A ° येत् त्रि ° । 6. B नैव । 7. In C last part of the 5th Paṭala and the first part of the 6th are repeated. 8. A ° सत्त्ववि ° । 9. A दृश्य-मान ° ।

नासाग्रे सर्षपं चिन्तेत्[1] सर्षपे सचराचरम्।
भावयेत् ज्ञानदं रम्यं[2] रहस्यं ज्ञानकल्पितम्॥
आकाशधातुमध्यस्थं भावयेत् सूर्य[3]मण्डलम्।
बुद्धबिम्बं विभावित्वा पदं तस्योपरि न्यसेत्॥

॥ हूँ ॥

आकाशधातुमध्यस्थं भावयेच्चक्रमण्डलम्।
लोचनाकारसंयोगं वज्रपद्मे[4] विभावयेत्॥
आकाशधातुमध्यस्थं भावयेत् रत्नमण्डलम्।
आदियोगं प्रयत्नेन तस्योपरि विभावयेत्॥
आकाशधातुमध्यस्थं भावयेत् पद्ममण्डलम्।
पद्माकारसुसंयोगं[5] भावयेत् रागवज्रिणम्॥
आकाशधातुमध्यस्थं भावयेत् रश्मिमण्डलम्।
स्रजे[6]द्बुद्धपदं सौम्यं[7] परिवारं विशेषतः॥
नीलोत्पलदलाकारं पञ्चशूलं विशेषतः।
यवमात्रं प्रयत्नेन नासिकाग्रे विचिन्तयेत्॥
चणकास्थिप्रमाणं तु अष्टपत्रं सकेशरम्।
नासिकाग्र इदं स्पष्टं[8] भावयेत् बोधितत्परः॥
चक्रादीनां विशेषेण भावनां तत्र[9] कल्पयेत्।
सिद्धोद्बो[10]धिपदं रम्यं मन्त्र[11]सिद्धिगुणालयम्॥
स्रजेत्तत्र समासेन बुद्धबोधिप्रतिष्ठितम्।
निश्चारयेद्धर्मपदं कायवाक्चित्तलक्षितम्॥

1. C सञ्चयन् चित्तं। 2. A omits. 3. B ° रत्न °। 4. C वज्रं पद्मं। 5. A पद्मरागप्रभाकारं। 6. A स्फुर °। 7. A रम्यं। 8. A शस्तं, B शस्तं। 9. A तत् प्र °। 10. AC सिद्धते ब्रो °। 11. AB सर्व °।

अथ वज्रधरः श्रीमान् सर्वतत्त्वार्थदेशकः ।
सर्वचर्याग्रसम्भूतो[1] भाषते गुह्यमुत्तमम् ॥
षण्मासान् भावयेत् प्राज्ञो रूपशब्दरसान्वितः ।
गुह्यतत्त्वमहापूजां संपूज्य च विभावयेत् ॥
विण्मूत्राहारकृत्यार्थं कुर्यात् सिद्धिफलार्थिनः ।
सिद्ध्यतेऽनुत्तरं तत्त्वं बोधिचित्तमनाविलम् ॥
मांसाहारादिकृत्यार्थं[2] महामांसं प्रकल्पयेत् ।
सिद्ध्यते कायवाक्चित्तरहस्यं सर्वसिद्धिषु ॥
हस्तिमांसं हयमांसं श्वानमांसं तथोत्तमम् ।
भक्षेदाहारकृत्यार्थं न चान्यत्तु[3] विभक्षयेत् ॥
प्रियो भवति बुद्धानां बोधिसत्त्वश्च धीमताम् ।
अनेन खलु योगेन लघु बुद्धत्वमाप्नुयात् ॥
कामधात्वीश्वरो[4] लोके स भवेत् परकर्मकृत् ।
तेजस्वी बलवान् श्रेष्ठः कान्तिमान् प्रियदर्शनः ॥
सम्मानयेदिमं लोके[5] दर्शनेनैव चोदितः ।
इदं तत् सर्वबुद्धानां रहस्यं बोधिमुत्तमम् ।
मन्त्रगुह्यमिदं तत्त्वं[6] कायवाक्चित्तलक्षितम् ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे कायवाक्चित्ताधिष्ठानपटलः षष्ठोऽध्यायः ।

1. AC संबुद्धो । 2. B ° हारकृतार्थेन, A ° हारं च कृत्यर्थं । 3. B चान्नं तु । 4. A ° तुश्वले । 5. B दर्शनं मानयेल्लोके । 6. B गुह्यं ।

## सप्तमः पटलः।

अथ भगवान् सर्वतथागतकायवाक्चित्ताधि[1]पतिर्महा-समुच्चयमन्त्रचर्याग्रसंबोधिपटलमुदाजहार।

सर्वकामोपभोगैश्च[2] सेव्यमानैर्यथेच्छतः।
अनेन खलु योगेन लघु बुद्धत्वमाप्नुयात्॥
सर्वकामोपभोगैस्तु सेव्यमानैर्यथेच्छतः।
स्वाधिदैवतयोगेन[3] पराङ्गैश्च[4] प्रपूजयेत्॥
दुष्करैर्नियमैस्तीव्रैः सेव्यमानो न सिद्ध्यति।
सर्वकामोपभोगैस्तु सेवयंश्चाशु सिद्ध्यति॥
भिक्षाशिना न जप्तव्यं नैव भैक्ष्यरतो भवेत्।
जपमन्त्रैरभिन्नाङ्गः सर्वकामोपभोगकृत्॥
कायवाक्चित्तसौस्थित्यं प्राप्य बोधिं समश्नुते।
अन्यथाऽकालमरणं पच्यते[5] नरके ध्रुवम्॥
बुद्धाश्च बोधिसत्त्वाश्च मन्त्रचर्याग्रचारिणः।
प्राप्ता धर्म्मासनं[6] श्रेष्ठं सर्वकामोपसेवनैः॥
सेवयेत् कामगान्[7] पञ्च ज्ञानार्थिगणिनः[8] सदा।
तोषयेद्बोधिसत्त्वांश्च रागयेद् बोधिसौरिणा॥
रूपं विज्ञाय त्रिविधं पूजयेत् पूजनात्मकः।
स एवं भगवान् विज्ञो बुद्धो वैरोचनः प्रभुः॥

1. B °त्तवज्राधि°। 2. C °कामार्थभोगार्थैः। 3. B °योरैक्यं। 4. A पराङ्गेन च, C चोपहारैश्च। 5. A पच्चले। 6. A प्राप्ता धर्माचरं, C प्राप्य धर्माकरे। 7. A मांसगुणान्, C कामना। 8. B °रागिणः, C °लाभिनः।

शब्दं त्रिविधं विज्ञाय देवतानां निवेदयेत् ।
स एवं भगवान् बुद्धो बुद्धरत्नाकरः प्रभुः ॥
विज्ञाय त्रिविधं गन्धं[1] बुद्धादौ तु निवेदयेत् ।
स एवं भगवान् बुद्धो[2] रागधर्मधरः प्रभुः ॥
रसं ज्ञात्वा तु त्रिविधं देवतानां निवेदयेत् ।
स एवं भगवान् बिम्बो[3] बुद्धो योऽमोघवज्रिमान् ॥
स्पर्शं ज्ञात्वा तु[4] त्रिविधं स्वकुलस्य निवेदयेत् ।
स एवं भगवान् वज्री अक्षोभ्याकारलाभिनः ॥
रूपशब्दरसादीनां सदा चित्ते नियोजयेत् ।
इदन्तत् सर्वबुद्धानां गुह्यसारसमुच्चयम् ॥
स्पर्शशब्दादिभिर्मन्त्री देवतां भावयेत् सदा ।
अथवा भावयेत् तत्र कुलभेदविभावनैः[5] ॥
बुद्धानुस्मृतिसम्बोध्योपस्थानस्मृतिभावना ।
भावना कायवाक्चित्तवज्रानुस्मृतिभावना ॥
कुलानुस्मृतियोगेन क्रोधानुस्मृतिभावना ।
समयानुस्मृतियोगात् भावयन् बोधिमाप्नुयात् ॥
तां तां तच्छक्तिकां[6] प्राप्य योषितं रूपसुप्रभाम् ।
प्रच्छन्नमारभेत् पूजामधिष्ठानपद[7]स्मृतिः ॥
तथागतमहाभासां लोचनां वा वि[8]भावयेत् ।
द्वयेन्द्रिय[9]समापत्त्या बुद्धसिद्धिमवाप्नुयात् ॥

1. C गन्धं ज्ञात्वा तु त्रिविधं, A गन्धज्ञा गन्धं त्रिविधं । 2. A बिम्बो । 3. AC बुधो ॥ 4. A स्पर्शज्ञा तु, B स्पर्शधातुं तु । 5. A ° भेदेन भेदतः । 6. A षोडशाब्दिकां । 7. A ° पदैः । 8. A ° बोधि । 9. A द्वेषेन्द्रिय ° B बुद्धेन्द्रियं ।

हूँकारं च ओँकारं च पँकारं च विकल्पयेत्।
पञ्चरश्मिसमाकीर्णं वज्रपद्मं च भावयेत्॥
वज्रांशुमिव सज्ज्वालां भावयेत्तां मनोरमाम्।
बुद्धानुस्मृतियोगादीन् भावयेद् बोधिकाङ्क्षिणः॥

तत्र कथं बुद्धानुस्मृतिभावना।

[द्वयेन्द्रियसमापत्त्या] बुद्धबिम्बं विभावयेत्।
रोमकूपाग्रविवरे[1] बुद्धमेघान् स्फरेद्बुधः॥

[2]तत्र कथं धर्मानुस्मृतिभावना।

[द्वयेन्द्रियसमापत्त्या] वज्रधर्मं विभावयेत्।
रोमकूपाग्रविवरे धर्ममेघान् स्फरेद्बुधः॥

तत्र कथं वज्रानुस्मृतिभावना।

[द्वयेन्द्रियसमापत्त्या] वज्रसत्त्वं विभावयेत्।
रोमकूपाग्रविवरे वज्रमेघान् स्फरेद्बुधः॥

तत्र कथं कुलानुस्मृतिभावना।

[द्वयेन्द्रियसमापत्त्या] बुद्धबिम्बं विभावयेत्।
रोमकूपाग्रविवरे कुलमेघान् स्फरेद्बुधः॥

तत्र कथं क्रोधानुस्मृतिभावना।

[द्वयेन्द्रियसमापत्त्या] क्रोधेश्वरं विभावयेत्।
रोमकूपाग्रविवरे क्रोधमेघान् स्फरेद्बुधः॥

तत्र कथं समयानुस्मृतिभावना।

स्ववज्रं पद्मसंयुक्तं द्वयेन्द्रियप्रयोगतः।
स्वरेतोबिन्दुभिर्बुद्धान् वज्रसत्त्वांश्च[3] पूजयेत्॥

1. A ° रैः। 2. A omits तत्र to the end of the para. 3. C ° सत्त्वं च।

तत्र कथं मण्डलानुस्मृतिभावना ।

[द्वयेन्द्रियसमापत्त्या] स्फरेतस्तु विचक्षणः ।

निःसारयेत् सदा योगी मण्डलान्[1] मण्डलाकरान् ॥

तत्र कथं कायानुस्मृतिभावना ।

यत्कायं सर्वबुद्धानां पञ्चस्कन्धप्रपूरितम् ।

बुद्धकायस्वभावेन ममापि तादृशं[2] भवेत् ॥

तत्र कथं वाचानुस्मृतिभावना ।

यदेव वज्रधर्मस्य वाचो निर्युक्तिसम्पदः ।

ममापि तादृशो वाचो भवेद्धर्मधरोपमः ॥

तत्र कथं चित्तानुस्मृतिभावना ।

यच्चित्तं समन्तभद्रस्य गुह्यकेन्द्रस्य धीमतः ।

ममापि तादृशं चित्तं तद्[3]वज्रधरोपमम् ॥

तत्र कथं सत्त्वानुस्मृतिभावना ।

यच्चित्तं सर्वसत्त्वानां कायवाक्चित्तलक्षितम् ।

ममापि तादृशं चित्तं आकाशसमसारिणम् ॥

तत्र कथं सर्वमन्त्रमूर्त्तिकायवाक्चित्तानुस्मृतिभावना ।

यत्कायं मन्त्रवज्रस्य वाचा कायविभावनम् ।

ममापि तादृशं चित्तं[4] भवेन्मन्त्रधरोपमम् ॥

तत्र कथं समयानुस्मृतिभावना ।

समयाचरेन्द्रविधिना विधिवत् फलकाङ्क्षिणः ।

मानयेत् ताथागतं व्यूहं सुतरां सिद्धिमाप्नुयात् ॥

1. A omits. 2. A समर्पितो दृढं । 3. AB भवे ° । 4. C मित्यं ।

तत्र कथं प्रज्ञापारमितासमयानुस्मृतिभावना ।

प्रकृतिप्रभास्वराः सर्वे[1] अनुत्पन्ना निराश्रयाः[2] ।

न बोधिर्नाभिसमयो नवान्तं न च सम्भवः ॥

तत्र कथमनुत्पादानुस्मृतिभावना ।

प्रकृतिप्रभास्वरं सर्वं निर्नि[3]मित्तं निरक्षरम् ।

न द्वयं नाद्वयं शान्तं खसदृशं सुनिर्मलम् ॥

तत्र कथं द्वेषकुलपूजानुस्मृतिभावना ।

द्वादशाब्दिकां संप्राप्य योषितं स्थिरचेतसम् ।

कुलयोगप्रभेदेन स्वशुक्रेण प्रपूजयेत् ॥

अनेन ताथागतं कायं[4] चित्तं वज्रधरस्य च ।

वाचं[5] धर्मध[6]रास्य प्राप्येतेहैव जन्मनि[7] ॥

कायवाक्चित्तसंसिद्धौ ये चान्ये हीनजाः स्मृताः ।

सिध्यन्ति तस्य जापेन[8] त्रिवज्राभेद्यभावनैः[9] ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे मन्त्रचर्यापटलः सप्तमोऽध्यायः ।

1. A सैव । 2. BC °श्रवाः । 3. B सन्नि° । 4. A adds °वाक्° । 5. B °ची । 6. B °वरा° । 7. AB वज्रवर्त्मनि । 8. A तेषां सिध्यन्ति जापेन । 9. A °साधनैः ।

## अष्टमः पटलः ।

अथ भगवान् रत्नकेतुस्तथागतो भगवन्तं सर्वतथागत[1]काय-वाक्चित्ताधिपतिं परमेश्वरं महावज्रधरमनेन स्तोत्रराजेना-ध्येषयामास ।

वज्रसत्त्व[2] महायानाकाशचर्य विशोधक ।
समन्तभद्र पूजाग्र देश पूजां जिनोत्तम ॥
रागद्वेषमोहवज्र वज्रयानप्रदेशक ।
आकाशधातुकल्पा[3]ग्र घोष पूजां जिनालय ॥
मोक्षमार्गप्रणेता च त्रियानपथवर्त्तक ।
बुद्ध सौभाग्यशुद्धात्म भाष पूजां नरोत्तम ॥
बोधिचित्त विशालाक्ष धर्मचक्रप्रवर्त्तक ।
कायवाक्चित्तसंशुद्ध वज्रयान नमोऽस्तु ते ॥
अथ वज्रधरो राजा सर्वाकाशमहाक्षरः ।
सर्वाभिषेकसर्वार्थः सर्वेशो वज्ररत्नधृक् ॥
पूजां ताथागतीं श्रेष्ठां त्रिवज्राभेद्यसंस्थिताम् ।
कायवाक्चित्तसौभाग्यां भाषते जिनसम्भवाम् ॥
प्राप्य कन्यां विशालाक्षीं रूपयौवनमण्डिताम् ।
पञ्चविंशतिकां गुह्ये तिर्यगस्याः[4] प्रकल्पयेत् ॥
शुचौ विविक्ते पृथिवीप्रदेशे
जिनात्मजं शान्तशिवालये च ।
वि[5]शुद्धतोयादिविलेपनं वा
कुर्वीत शश्वज्जिनपूजहेतोः ॥

1. A adds °गुह्य°। 2. A °सत्त्व। 3. A तस्या°। 4. B तिर्यच्चवपि, C तिर्यग्भ्योऽपि। 5. B वोधि°।

स्तनान्तरं यावच्छिखान्तमध्ये
वक्ता[1]न्तरे चापि न्यसेद्विधिज्ञः।
नाभिकटिगुह्ये जि[2]नात्मजानां
न्यासं प्रकुर्यात् कुलपञ्चकानाम्॥
आकाशधातुमध्यस्थं भावयेद् ज्ञानसागरम्।
आत्मानं चन्द्रमध्यस्थं भावयेद् हृदये पुनः[3]॥
संहारं च प्रकुर्वीत यदीच्छेत् शान्तवज्रधृक्।
चतूरत्नमयं स्तूपं[4] रश्मिज्वालाविभूषितम्॥
ज्ञानोदधिं स्वियं स्थाप्य[5] आलयन्तु विचिन्तयेत्।
स्वरोमकूपविवरे पूजामेघान् स्फरेद्बुधः॥
पद्मं पञ्चविधं ज्ञात्वा[6] उत्पलं च विचक्षणः।
जातिकां त्रिविधं कृत्वा देवतानां निवेदयेत्॥
कर्णिकारस्य कुसुमं मल्लिकायूथिकां तथा[7]।
करवीरस्य कुसुमं ध्यात्वा पूजां प्रकल्पयेत्॥
योजनशतविस्तारं भावयेत् चक्रमण्डलम्।
कुलानान्तु[8] प्रकुर्वीत सदाभ्यास[9]विचक्षणः॥
पद्मं वज्रं तथा खड्गं उत्पलं भावयेद्बुधः।
योजनकोटिविस्तारं चतुरस्रं[10] सुशोभनम्॥
चतूरत्नमयं चैत्यं स्वच्छं प्रकृतिनिर्मलम्।
भावयेच्चामरं प्राज्ञः कुलानां पूजहेतुना॥
पञ्चकामगुणैः स्वच्छां यादवीं च समारभेत्।
रत्नवस्त्रादिभिर्नित्यं पूजयेद्बोधिकांक्षया॥

1. B चरणा°। 2. AB °ह्यजे°। 3. A विधिवद्बुधः, C °हृदयेषु च। 4. A तं च। 5. B °धेस्त्रिपथाभ्य। 6. A विधिज्ञो हि। 7. B ततः। 8. A °नान्तः, C °नान्तं। 9. A ध्यान°। 10. A गन्धराग°।

पञ्चोपहारपूजाद्यैर्देवतां तोषयेत् सदा ।
कन्यां रत्नकरीं श्रेष्ठां नानारत्नाद्यलङ्कृताम् ॥
दद्याद्वै सर्वबुद्धानां सिद्धये तीव्रसाधकाः ।
सप्तरत्नैरिदं कृत्वा परिपूर्णं विचक्षणाः ॥
दद्यात् प्रतिदिनं प्राज्ञो दानाब्धि[1]सिद्धि[2]काङ्क्षया ।
अर्चिपति[3]मुद्रां समादाय बुद्धमण्डलमध्यतः ॥
दद्यात् स्पर्शसमायोगं बुद्धानां रागबुद्धिना ।
आकाशधातुमध्यस्थं भावयेत् बुद्ध[4]मण्डलम् ॥
बिम्बं ताथागतमयं विधिभिः[5] पूजयन्ति ये ।
तूर्णं संप्राप्य सुभगां चारुवक्त्रां सुशोभनाम् ॥
अधिष्ठानपदं ध्यात्वा तत्त्वपूजां प्रकल्पयेत् ।
गुह्यशुक्रं विशालाक्षो[6] भक्षयेत् दृढबुद्धिमान्[7] ॥
इदं तत् सर्वमन्त्राणां कायवाक्चित्तपूजनम्[8] ।
मन्त्रसिद्धिकरं[9] प्रोक्तं[10] रहस्यं ज्ञानवज्रिणाम् ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे चित्तसमयपटलः अष्टमोऽध्यायः ।

1. A दानार्थी । 2. A सर्व ° । 3. A अधिपति °, B अरिचिपति ° । 4. C व्यूह ° । 5. AB विपसुचैः । 6. B ° क्षीं । 7. A ° ना । 8. A ° वच्चकम् । 9. AC परं । 10. B प्राप्तं ।

अथ वज्रधरो राजा सर्वाकाशमहाक्षरः[1] ।
सर्वाभिषेकचर्याग्रः सर्ववित् परमेश्वरः ॥
कायवाक्चित्तसंयोगं[2] त्रिवज्राभेद्यमण्डलम् ।
घोषते[3] परमं रम्यं रहस्यं बुद्धज्ञानिनाम् ॥
आकाशधातुमध्यस्थं भावयेद्बुद्धमण्डलम् ।
अक्षोभ्यवज्रं भावित्वा[4] पाणौ वज्रं विभावयेत् ॥
स्फुलिङ्गगहनाकीर्णं[5] पञ्चरश्मिप्रपूरितम् ।
बुद्धस्य प्रभुतां[6] ध्यात्वा तत्र[7] वज्रेण चूर्णयेत् ॥
कायवाक्चित्तसंयोगं[8] अष्ट[9]वज्रेण चूर्णितम् ।
भावयेत् परमं ध्यानं चित्तसिद्धिसमावहम्[10] ॥
अनेन गुह्यवज्रेण सर्वसत्त्वं विघातयेत्[11] ।
येऽप्यस्य तस्य[12] वज्रस्य बुद्धक्षेत्र[13]जिनौरसाः ।
[14]द्वेषकुलसमायोगं ज्ञेयः सर्वकुलोन्नतम् ॥
अथ वज्रधरो राजा ज्ञानमोक्षप्रसाधकः ।
स्वभावशुद्धनिर्लेपो[15] बोधिचर्याप्रवर्त्तकः ॥
भाषते[16] समयं तत्त्वं बुद्धबोधिप्रसाधकम् ।
आकाशधातुमध्यस्थं भावयेच्चक्रमण्डलम् ॥

1. A ° बलः । 2. AC समायोगात् । 3. AC ° येत् । 4. A प्रकृत्या । 5. BC ° महसा दीप्तं । 6. A प्रथमभूतां । 7. A omits. 8. AC ° सम्भोगं । 9. A नेष्टं, C साष्ट ° । 10. C ° व्यूहं । 11. BC ° सत्त्वाभिघातयेत् । 12. AC ये ये तेभ्य । 13. BC क्षिप्रं । 14. B द्वेषकुलसमं तत्र ज्ञेयः सर्वकुलोद्भवः । C द्वेषकुलं समासाद्य ज्ञेयः सर्वकुलार्णवः । 15. B ° निलये, C ° निरये । 16. BC भाष्यते ।

वैरोचनं विभावित्वा सर्वबुद्धान् विभावयेत् ।
सर्वरत्नप्रयोगेन वज्रबिम्बं प्रकल्पयेत् ॥
हरणं सर्वद्रव्याणां[1] चित्तवज्रेण विभावयेत् ।
भवन्ति चिन्तामणिसमा द्रव्योदधिप्रपूरिताः ॥
औरसाः सर्वबुद्धानां भवन्ति मुनिपुङ्गवाः ।
मोहकुलसमं तत्त्वं[2] ज्ञेयं सर्वकुलोद्भवैः[3] ॥
अथ वज्रधरो राजा रागमोह[4]प्रसाधकः ।
गुह्यशुद्धनिरालम्ब उद्घोषयति मण्डलम् ॥
आकाशधातुमध्यस्थं भावयेत् पद्ममण्डलम् ।
अमिताभं[5] प्रभावित्वा बुद्धैः सर्वं प्रपूरयेत् ॥
योषिदाकारसंयोगं सर्वेषां तत्र भावयेत् ।
चतुःसमययोगेन इदं वज्रनयोत्तमम् ॥
द्वयेन्द्रियप्रयोगेन सर्वांस्तानुप[6]भुञ्जयेत् ।
इदन्तत् सर्वबुद्धानां त्रिकायाभेद्यभावनम् ॥
रागकुलसमायोगं भावनीयं तु[7] मन्त्रिणा ॥
अथ वज्रधरो राजा वज्रमन्त्रार्थसाधकः ।
ज्ञानसम्भूतनैरात्मा इदं वचनमब्रवीत् ॥
आकाशधातुमध्यस्थं भावयेद्बुद्धमण्डलम् ।
वज्रामोघं प्रभावित्वा सर्वबुद्धांस्तु भावयेत् ॥
मृषावादं वज्रपदं सर्वबिम्बान् विभावयेत् ।
विसम्वादयेज्जिनान्[8] सर्वांस्तथा सर्वजिनालयान् ॥

1. C °नि ।  2. A °समायोगं, C तत्त्वसमं ।  3. BC °कुलार्णवे ।  4. AC °मोक्ष° ।  5. C °युं ।  6. B °ननु° ।  7. BC रागकुले सत्त्वसमयो भावनीयस्तु ।  8. A °दवज्रिणं ।

इदन्तत् सर्वबुद्धानां वागाकाशं सुनिर्मलम्।
मन्त्रसिद्धिकरं प्रोक्तं रहस्यं ज्ञानबुद्धिनाम्॥
समया[1]कर्षणाकुलं प्रेरणीयं[2] यथार्थतः।
अथ वज्रधरो राजा त्रिवज्राभेद्यवज्रिणाम्।
सिद्धिवज्रप्रणेता च इदं[3] वचनमब्रवीत्॥
[4]आकाशधातुमध्यस्थं भावयेत् समयमण्डलम्।
रत्नकेतुं प्रभाविच्चा सर्वबिम्बैरिदं स्फरेत्॥
पारुष्यवचनाद्यैस्तु सेवयन् ज्ञानमाप्नुयात्।
इत्याह भगवान् सर्वतथागतवज्र[5]व्यूहः॥

अथ खलु सर्वतथागतसमयवज्रकेतुप्रमुखास्ते महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता इदं वाग्वज्र[6]घोषमकार्षुः। किमयं भगवान् सर्वतथागताधिपतिः त्रैधातुव्यतिरिक्तान्[7] सर्वलोकधातुव्यतिरिक्तान् सर्वतथागतसर्वबोधिसत्त्वपर्षन्मध्ये अद्भुतवाक्यार्थ[8]वज्रपदं भाषते स्म।

अथ भगवन्तः सर्वतथागतास्तानभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमान् सर्वतथागतसमयवज्रकेतुप्रमुखान् महाबोधिसत्त्वानेवमाहुः। मा कुलपुत्रा इमां हीनसंज्ञां जुगुप्सितसंज्ञां चोत्पादयथ। तत् कस्माद्धेतोः। राग[9]चर्या कुलपुत्रा यदुत बोधिसत्त्वचर्या यदुत[10]अग्रचर्य्या। तद्यथा अपि नाम कुलपुत्रा आकाशं सर्वत्रानुगतं[11] आका[12]शानु-

1. A समा°। 2. B °यो। 3. A °रमिदं। 4. BC omit three lines from here. 5. AC omit °वज्र°। 6. A बोधिसत्त्व कथं वज्र°, C वाक्-कायवज्र°। 7. A व्यक्तरचां। 8. AC °वाक्य°। 9. A अग्र°। 10. Instead of यदुत etc. A has कुलपुत्रा यदुत मन्त्रचर्या। 11. A °तथागतं। 12. C न साका°।

गतानि सर्वधर्माणि। तानि[1] न कामधातुस्थितानि न रूपधातुस्थितानि[2] नारूपधातुस्थितानि न चतुर्महाभूतस्थितानि। एवमेव कुलपुत्राः सर्वधर्मा अनुगन्तव्याः। इदमर्थवशं विज्ञाय[3] सर्वतथागताः सर्व[4]सत्त्वानामाशयं विज्ञाय ततो[5] धर्मं देशयन्ति।

एवमेव कुलपुत्रा आकाशधातुपद[6]निरुक्त्या[7] ते[8] तथागतसमया अनुगन्तव्याः। तद्यथा अपि नाम कुलपुत्राः काण्डं च मथनीयं च पुरुषहस्तव्यायामं च प्रतीत्य धूमः प्रादुर्भवति अग्निमभिवर्त्तयति[9] सचाग्निर्न काण्डस्थितो न मथनीयस्थितो न पुरुषहस्तव्यायामस्थितः। एवमेव कुलपुत्रा सर्वतथागतवज्रसमया अनुगन्तव्याः। गमनागमनाद्यैरिति। अथ ते सर्वे बोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता[10] विस्मयोत्फुल्ललोचना इदं घोषमकार्षुः।

महाद्भुतेषु[11] धर्मेषु आकाशसदृशेषु[12] च।
निर्विकल्पेषु शुद्धेषु संवृति[13]स्तु प्रगीयते॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे परमार्थाद्वयतत्त्वार्थसमयपटलः नवमोऽध्यायः।

1. BC add च सर्वधर्माणि। 2. AB omit न रूपधातुस्थितानि। 3. A °नं। 4. BC omit. 5. Adds एतान्। 6. B omits °धातुपद°। 7. A °क्तानि। 8. A एव। 9. C निवर्त्तयति। 10. B omits. 11. A महद्गुणेषु। 12. A °समयेषु। 13. B °वि°।

अथ भगवन्तः सर्वतथागताः पुनः समाजमागत्य[1] भगवन्तं सर्वतथागताधिपतिं[2] महासमयवज्रतत्त्वाभिसम्बोधिकायवाक्-चित्तगुह्यं तथागतं नमस्यैवमाहुः ।

भाषस्व भगवन् तत्त्वं मन्त्रसारसमुच्चयम् ।
कायवाक्चित्तगुह्याख्यं[3] महासिद्धिनयोत्तमम् ॥ इति ।
अथ वज्रधरो राजा सर्वक्लेशान्तकृत्[4] प्रभुः ।
दीप्तवर्णो[5] विशालाक्ष इदं वचनमब्रवीत् ॥
कायवाक्चित्तवज्राणां कायवाक्चित्तभावनम् ॥
निर्विकल्पनिरालम्बसमता न क्वचित् स्थितम् ॥

अथ भगवान् स्वभावशुद्धस्तथागतः पारमितामन्त्रनयवज्रं नाम समाधिं समापन्नः तांश्च सर्वतथागतानेवं आह । अस्ति भगवन्तः सर्वतथागता अक्षोभ्यप्रमुखाः सर्वतथा[6]गता अनेक-[7]विद्याकोटिनियुतशतसहस्रैः सर्वार्थक्रियानाटकं दर्शयन्ति । दशदिग्लोकधातुपर्यवसानेषु सर्वलोकधातुषु[8] पञ्चकामगुणैः क्रीडन्ति रमन्ते परिवारयन्ति[9] । न च ते[10] मन्त्र[11]चर्याभियुक्त-मवलोकयन्ति । तत् कस्माद्धेतोः ? निष्पन्नो बतायं तथागत-मन्त्रचर्यानयधर्मतत्त्वे[12] । तत्र[13] तेषां महासत्त्व[14]पुरुषाणां व्यवलोकनार्थमिदं सर्वतथागतकायवाक्चित्तमन्त्र[15]रहस्यं[16]

1. BC °स्य । 2. omitted in AC. 3. A °गुह्यं च । 4. C °शार्णवः । 5. A °स्वपड़ो । 6. A °खास्तथा° । 7. AB °कैः । 8. BC omit. 9. A विचालयन्ति । 10. A तेन । 11. A omits. 12. A °धर्मे । 13. C तत्, B omits. 14. A महापु° । 15. A adds °वज्र° । 16. C adds सर्व° before.

मन्त्र[1]हृदयसंचोदनं नाम महापरमगुह्यं सर्वतथागतकाय-वाक्चित्तसमयालम्बनं[2] सर्ववज्रधरकायवाक्चित्तसमयालम्बनं सर्वधर्मधरकायवाक्चित्तसमयालम्बनं स्वकायवाक्चित्तवज्रेभ्यो वाक्पथ[3]निरुक्त्या इदं मन्त्रसमुच्चयमुदाजहार।

॥ हूँ ओँ आः स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वबुद्धाः सह्यौ[4]रसाः।
कम्पिता मूर्च्छामापेदे वज्रसत्त्वमनुस्मरन् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिरिमं समयमुदाजहार।

आकाशधातुमध्यस्थं भावयेद् बुद्धमण्डलम्।
हुँकारं तत्र मध्यस्थं स्वबिम्बेन[5] प्रकल्पयेत् ॥
वज्ररश्मिमहादीप्तं विस्फुरन्तं विचिन्तयेत्।
बुद्धानां कायवाक्चित्तं हृतं तेन[6] विभावयेत् ॥
स भवेत्तत्क्षणात् एव कायवाक्चित्तवज्रधृक्।
वज्रसत्त्वो महाराजः सर्वाग्रः[7] परमेश्वरः ॥
स्वमण्डलं स्वमन्त्रेण निष्पादनविधिर्भवेत्।
इदन्तत् सर्वबुद्धानां सारं वज्रसमुच्चयम ॥
स्वमन्त्रपुरुषं[8] ध्यात्वा चतुःस्थानेषु रूपतः[9]।
त्रिमुखाकारयोगेन त्रिवर्णेन विभावयेत् ॥

इत्याह भगवान् खवज्रसमयः। तत्रेदं परमं वज्ररहस्यम्।

हृदयमध्यगतं सूक्ष्मं[10] मण्डलानां विभावनम्।
तस्य मध्यगतं चिन्तेद[11]क्षरं परमं पदम् ॥

1. A adds °गुह्य°। 2. C omits from सर्व° etc. to समयालम्बनं below. 3. A वाक्यार्थं। 4. AC सभ्रौ°। 5. A बुद्धबिम्बं। 6. A हृद्गतेन। 7. C पर्यायः, A सर्वार्थः। 8. C °रूपं। 9. A पुरतः। 10. A गुह्यं। 11. A चित्तम°।

पञ्चशूलं महावज्रं भावयेत् योगवित्[1] सदा ।
चिन्तयेत् त्रीणि वज्राणि वज्राङ्कुशप्रभेदतः ॥
हृदयं ताडयेत् तेन देवताद्यं[2] प्रचोदयेत् ।
इदं तत् सर्ववज्राणां बुद्धबिम्ब[3]प्रसाधनम् ॥
चक्रपद्मकराभ्यां तु[4] वज्राङ्कुशविभावनम् ।
चोदनं हृदये प्रोक्तं इदं नाटकसम्भवम् ॥
सप्ताहं यावत् कुर्वीत इदं वज्रनयोत्तमम् ।
सिद्ध्यते कायवाक्चित्तरहस्यं ज्ञानवज्रिणाम् ॥
व्यवलोकन्ति वरदा भीताः सन्त्रस्तमानसाः ।
ददन्ति विपुलां सिद्धिं मनःसन्तोषणप्रियाम् ॥
बुद्धाश्च बोधिसत्त्वाश्च मन्त्रचर्याग्रसाधकाः ।
अतिक्रामेद्यदि मोहात् तदन्तं तस्य जीवितम् ॥
अथ वज्रधरो राजा त्रिलोकाग्रानुशासकः ।
त्रिलोकवरवज्राग्रमिदं[5] घोषमकार्षीत् ॥
यावन्तो मन्त्रपुरुषास्त्रिवज्रज्ञानपूरिताः ।
द्वये[6]न्द्रियप्रयोगेण सर्वभावविकल्पनम् ॥
इदं तत् सर्वबुद्धानां मन्त्रसमयसाधनम्[7] ।
विश्व[8]श्वरीप्रविष्टेषु वज्रसंयोगभावना[9] ।
रक्तां रक्तेक्षणां वीक्ष्येत्[10] इदं समयमण्डलम् ॥
अथ वज्रधरो राजा सर्वतथागतात्मजः ।
सर्वाभिषिक्तबुद्धाग्र इदं वचनमब्रवीत् ॥

1. B °गतः । 2. A नवतां वा । 3. A °बोधि° 4. AC °कुलाद्येषु । 5. A °ग्र इदं° । 6. B यद्ये° । 7. AC °भावनम् । 8. A विद्ये° । 9. A °नम् । 10. A °क्ष्य ।

लोकधातुषु सर्वेषु यावत्यो योषितः[1] स्मृताः ।
महामुद्राप्र[2]योगेण सर्वास्ता उपभुञ्जयेत् ॥
स्फरेद्बुद्धपदं तत्र असंख्या[3]कोटिवज्रिणाम्[4] ।
इत्याह भगवान् बोधिसमयः ॥
अनेन प्राप्नुयाद्बोधिं त्रिवज्राकाशसन्निभाम् ।
स भवेत् वज्रसत्त्वाग्रो बोधिचित्तजिनोदधिः ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतहृदयसञ्चोदनो नाम पटलः दशमोऽध्यायः ॥

1. AB बोधितः । 2. B ° द्वि ° । 3. B ° ङ्ख्य ° । 4. C ° णा ।

एकादशः पटलः ।

अथ भगवान्[1] कायवाक्चित्तवज्र[2]स्तथागतो[3]वज्रपुरुषोत्तमं नाम समाधिं समापद्येदं सर्वतथागतमन्त्रवज्र[4]पुरुषोत्तम-[5]पटल[6]मुदाजहार ।

त्रिवज्राक्षरमन्त्राग्रैर्महामुद्राविभावनम् ।
कर्त्तव्यं ज्ञानवज्रेण सर्वबोधिसमावहम् ॥
ओँकारं ज्ञानहृदयं कायवज्रसमावहम् ।
आःकारं बोधिनैरात्म्यं वाक्य[7]वज्रसमावहम् ॥
हूँकारं कायवाक्चित्तं त्रिवज्राभेद्यमावहम् ।
इत्याह भगवान् सर्वतथागतकायवाक्चित्तमन्त्र[8]पुरुषः ।
खवज्रमध्यगं चिन्तेत्[9] मण्डलं सर्ववज्रगम् ।
भ्रुँकारं भावयेत्तत्र वज्रमेघस्फरा[10]वहम् ॥
तत्रेदं ज्ञानवज्रहृदयम् ॥

॥ भ्रुँ ॥

वज्रमण्डलमध्यस्थं ओँकारं तु प्रभावयेत् ।
स्वच्छमण्डलमध्यस्थं आः[11]कारं तु विचिन्तयेत् ॥
[12]धर्ममण्डलमध्यस्थहूँकारस्य विभावना[13] ।
भ्रुँकारमालयं ध्यात्वा त्रिवज्रोत्पत्तिभावना ॥
इत्याह भगवान् गुह्यसमयः ।

1. A adds सर्वतथागतगुह्य before this. 2. A omits ° वज्र ° । 3. A adds सर्वतथागतवज्रमन्त्रविद्या and C adds सर्वतथागत before this. 4. A adds विद्या । 5. BC ° ष ° । 6. A पद ° । 7. A वाग् ° । 8. A adds विद्या । 9. A चित्तं । 10. A समा ° । 11. B आ ° । 12. B omits this line. 13. A प्रभावनम् ।

हृदयं वाध्व[1]बुद्धेभ्यः कायवाक्चित्तरञ्जनम्[2] ।
ओँकारं बुद्धकायाग्र्यं आःकारं वाक्पथम्[3] तथा ॥
हूँकारं चित्तज्ञानौघं इदं बोधिनयोत्तमम् ।
इदं तत्सर्वबुद्धानां बुद्धबोधिप्रसाधकम् ॥
निर्मितं ज्ञानवज्रेण बुद्धहेतुफलोदयम् ।
एते वै बुद्धपुरुषा मन्त्रविद्येति कीर्त्तिताः ॥
निष्पादनादिसमयैस्त्रिवज्राभेद्यभावनैः ।

॥ सर्वतथागत[4]समयतत्त्व[5]ज्ञानवज्राधिष्ठानहेतुर्नाम समाधिः ॥

विविक्तेषु च रम्येषु इदं योगं समारभेत् ।
सिध्यते कायवाक्चित्तं पद्मैकेन न संशयः ॥
खवज्रमध्यगं चिन्तेत्[6] स्वच्छमण्डलमुत्तमम् ।
निष्पाद्य[7] स्वमन्त्रसमयं ओँकारं हृदये न्यसेत् ॥
पञ्चरश्मिमहामेघान् वैरोचनाग्रभावनैः ।
अनेन कायं बुद्धस्य वज्रवैरोचनोदधिः ॥
सिध्यते पद्ममात्रेण बुद्धकायसमप्रभः ।
चित्रवज्रकल्पं तिष्ठेयुः सेवयन्[8] पञ्चज्ञानिनाम् ॥

इत्याह भगवान् काय[9]वज्रगुह्यः ।

॥ सर्वतथागतकाय[10]रश्मिव्यूहो[11] नाम समाधिः ॥

[12]खवज्रमध्यगं चिन्तेत्[13] धर्ममण्डलमुत्तमम् ।
निष्पाद्य स्वमन्त्रपुरुषमाःकारं वाक्पथे न्यसेत् ॥

1. A सर्व° । 2. C पञ्जरः । 3. A बुद्धवाक् । 4. A adds °चित्त° । 5. A °ये । 6. A चित्तं । 7. A °दयेत् । 8. A °न्नेव । 9. C वाग्° । 10. C °वाग्° । 11. A वज्ररश्मि, C समयसम्भवो । 12. C omits 4 lines from here. 13. A चित्तं ।

पञ्चवर्णमहावज्रं लोकेश्वराग्रभावनैः।
निष्पाद्य समयज्ञानवाक्समयप्रपञ्चकम्॥
धर्मवाक्य[1]समारूढो धर्मवज्रसमो भवेत्।
त्रिवज्रकल्पं तिष्ठेयुः सेवयन् पञ्चज्ञानिनाम्॥
इत्याह भगवान् वाग्वज्रगुह्यः।

॥ सर्वतथागतवाग्वज्रसमयसम्भवो नाम समाधिः॥

खवज्रमध्यगं चिन्तेत् वज्रमण्डलमुत्तमम्।
निष्पाद्य स्वमन्त्रपुरुषं हूँकारं चित्तसंस्थितम्॥
महा[2]समयतत्त्वं वै पञ्चवर्णं विभावयेत्।
कर्त्तव्यं ज्ञानवज्रेण सर्ववज्रजिनालयम्॥
वज्रचित्तसमः शास्ता स भवेद्[3]ज्ञानगुणोदधिः।
त्रिवज्रकल्पं तिष्ठेयुः सेवयन् पञ्चज्ञानिनाम्॥
इत्याह भगवान् वज्रचित्तगुह्यः।

॥ सर्वतथागतकायवाक्चित्त[4]वज्रो नाम समाधिः॥

महावज्रं समाधाय ज्ञान[5]मण्डलमध्यतः।
खँकारं सर्वकार्येषु खवज्रज्ञानसमो भवेत्॥

॥ खँ ॥

बुद्धैश्च बोधिसत्त्वैश्च पूज्यमानो मुहुर्मुहुः।
तिष्टेत् त्रिकल्प[6]समयं बुद्धैरपि न दृश्यते॥
इत्याह भगवान् खवज्रसमयः।

1. B ° कृपथ °। 2. A adds ° वज्र °। 3. A सर्व °। 4. A adds ° समयसम्भव °। 5. A वज्र °। 6. A ° इति कल्प °।

॥ कायवाक्चित्तवज्रान्तर्ज्वाल[1]सम्भवव्यूहमाली[2] नाम समाधिः ॥

ध्यात्वा स्वमन्त्रपुरुषं वज्रमण्डलमध्यतः ।
हृदये हूँकारवज्राख्यं कृत्वा रश्मिविभावनम् ॥

॥ हूँ ॥

मञ्जुश्रीसमयसम्भोगं कायवाक्चित्तवज्रिणः ।
स भवेद्बोधिसत्त्वात्मा दशभूमिप्रतिष्ठितः ॥

॥ बोधिसत्त्वज्ञानसमयचन्द्रवज्रो नाम समाधिः ॥

खधातुमध्यगं ध्यात्वा थ्लीँ[3]कारं ज्वालसुप्रभम्[4] ।
परमास्त्रो[5] वज्रकायेन वज्रकायसमो भवेत्[6] ॥

॥ थ्लीँ ॥

॥ खवज्रसमयव्यूहालयो नाम समाधिः ॥

बुद्धाभिज्ञाग्रसमयैः पञ्चाभिज्ञसमो[7] भवेत् ।
इदन्तत् सर्वबुद्धानां[8] बुद्धाभिज्ञाग्रसाधनम् ॥
खधातु[9]मध्यगं चिन्तेत् वज्र[10]मण्डलमुत्तमम् ।
वज्रसत्त्वं प्रभावित्वा ज्ञाना[11]कारं प्रभावयेत् ॥

॥ श्रीँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्राक्षोभ्यसमो भवेदित्याह भगवानक्षोभ्यवज्रः[12] ।

1. A ° द्वार ° । 2. A ° मालिनी । 3. C प्लीं । 4. A त्रिकालस्वप्रभाकरः । 5. A शास्ता, C परमन्त्रो । 6. A माचरेत् । 7. A ° समयो । 8. A सिद्धिं । 9. C ° वज्र ° । 10. A बुद्ध ° । 11. A ° नमा ° । 12. A ° राजः ।

अक्षोभ्यसमकायेन वाक्चित्ताग्रधृक् सदा[1] ।
लोकधातुषु सर्वेषु पूज्यतेऽ[2]क्षोभ्यवज्रिणः ॥

॥ अक्षोभ्यसमयकायाभिसम्बोधिवज्रो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
आकाशवज्रं प्रभावित्वा त्रामा[3]कारं प्रभावयेत् ॥

॥ त्राँ ॥[4]

त्रिवज्रसमयध्यानेन त्रिवज्रकेतुसमो भवेदित्याह भगवान् रत्नकेतु[5]वज्रः ।

कायवाक्चित्तवज्रेण रत्नकेतुसमप्रभः ।
स भवेद् बोधिनैरात्म्यज्ञानवज्र[6]समावहः[7] ॥

॥ रत्नकेतु[8]समयसम्भोगवज्रो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
लोकेश्वरं प्रभावित्वा धर्म्मो[9]ँकारं विभावयेत् ॥

॥ ओँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्रामित[10]समो भवेदित्याह भगवानमितवज्रः ।

कायवाक्चित्तवज्रेण अमितायुःसमप्रभः ।
स भवेत् सर्वसत्त्वानां महायानपथोदयः ॥

॥ अमित[11]वज्रप्रभावश्रीर्नाम समाधिः ॥

खधातुमध्यगतं चिन्तेद् बुद्धमण्डलमुत्तमम् ।
वज्रोत्पलं[12]प्रभावित्वा समयौँकारं प्रभावयेत् ॥

1. A चित्तत्रिधारिणः । 2. A ° पूजयेद ° । 3. A रत्ना ° । 4. C ओँ । 5. C omits ° केतु ° । 6. AC ° गुह्य ° । 7. BC ° लयः । 8. BC omit ° केतु ° । 9. A धन्वा, ° C धर्मा ° । 10. C ° मृत ° । 11. AC add ° गुण ° । C omits ° वज्र ° । 12. C ° त्प्रभं ।

॥ ओँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्रामोघसमो भवेदित्याह भगवानमोघवज्रः ।

कायवाक्चित्तवज्रेण वज्रामोघसमप्रभः ।
स भवेद् ज्ञानोदधिः श्रीमान् सर्वसत्त्वार्थसम्भवः ॥

॥ अमोघसमयरश्मिज्ञानाग्रसम्भवो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
वैरोचनवज्रं प्रभावित्वा त्रिरोँकारं[1] प्रभावयेत् ॥

॥ ओँ ओँ ओँ ॥

त्रिवज्रसमयध्यानेन[2] वैरोचनवज्रसमो भवेदित्याह भगवान् वैरोचनवज्रः ।

कायवाक्चित्तवज्रेण वैरोचनसमप्रभः ।
स भवेद् ज्ञानसम्बोधिस्त्रिकायाभेद्यसाधकः ॥

॥ कायवाक्चित्तालम्बनसम्बोधिवज्रो[3] नाम समाधिः ॥

पर्वतेषु विविक्तेषु नदीप्रस्रवणेषु च[4] ।
श्मशानादिष्वपि कार्य्यमिदं ध्यानसमुच्चयम् ॥
अक्षोभ्यज्ञानवज्रादीन् ध्यात्वा खवज्रमध्यतः ।
पञ्चाभिज्ञप्रयोगेण स्थाने बुद्धाग्रभावना ॥

इत्याह भगवान् महावज्रसमयवज्राभिज्ञः ।

पञ्चशूलं महावज्रं पञ्चज्वालाविभूषितम् ।
पञ्चस्थानप्रयोगेण पञ्चा[5]भिज्ञसमो भवेत् ॥

1. त्रिकालं, C त्रयोँकारं । 2. C adds त्रिवज्र before this. 3. A °ज्ञानं । 4. A वा । 5. B वज्रा° ।

स्वमन्त्रं भावयेच्चक्रं स्फुलिङ्गगहनाकुलम् ।
पञ्चवज्रप्रयोगेण पञ्चा[1]भिज्ञसमो भवेत् ॥
खवज्रमध्यगं चिन्तेत् बुद्धज्वालासमप्रभम् ।
ध्यात्वा बुद्धप्रवेशेन बुद्धाश्रयसमो भवेत् ॥
बुद्धमण्डलमध्यस्थं काये वैरोचनं न्यसेत् ।
ओँकारं हृदये ध्यात्वा मन्त्र[2]विज्ञानभावना ॥
निरोधवज्र[3]गतं चित्तं यदा तस्य प्रजायते ।
स भवेच्चिन्तामणिः श्रीमान् सर्वबुद्धाग्रसाधकः[4] ॥
बुद्धमण्डलमध्यस्थं वज्राक्षोभ्यं प्रभावयेत् ।
हूँकारं हृदये ध्यात्वा चित्तबिन्दुगतं न्यसेत् ॥
बुद्धमण्डलमध्यस्थं अमिताभं[5] प्रभावयेत् ।
आःकारं हृदये ध्यात्वा चित्त[6]बिन्दुगतं न्यसेत् ॥
इदन्तत् समयाग्राग्रं[7] त्रिवज्राभेद्यभावनम्[8] ।
निरोधसमय[9]ज्ञानं बुद्धसिद्धिसमावहम्[10] ॥
खवज्रधातुमध्यस्थं भावयेत् स्वच्छमण्डलम् ।
ओँकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥
खवज्रधातुमध्यस्थं भावयेत् धर्ममण्डलम् ।
आःकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥
खवज्रधातुमध्यस्थं भावयेद् वज्रमण्डलम् ।
हूँकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥

1. AC वज्रा ° । 2. A सर्व ° । 3. A ° चक्र ° । 4. A ° धारकः । 5. BC अमितवज्रं । 6. A वज्र ° । 7. A ° ग्रेण । 8. B साधनम् । 9. A भावयन् । 10. C ° कुलम्, A ° वहेत् ।

इत्याह भगवान् त्रिवज्र[1]ज्ञानसमयः ।

य: प्रभूतमिमं योगं कायवाक्चित्तवज्रिणः ।
पठेद्वा चिन्तयेद्वापि सोऽपि वज्रधरो भवेत्[2] ।

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतमन्त्रसमयतत्ववज्रविद्यापुरुषोत्तमपटल एकादशोऽध्याय: ॥

1. AB add ° कल्प ° । 2. A ° पमं भवेत् ।

## द्वादशः पटलः ।

अथ वज्रधरः शास्ता स्रष्टा[1] ज्ञानाग्रसाधकः त्रिवज्रसमयतत्त्ववाक्वज्रमुदाजहार[2] ।

खधातुसमभूतेषु[3] निर्विकल्पस्व[4]भाविषु ।
स्वभावशुद्धधर्मेषु नाटकोऽयं प्रभाव्यते ॥
महाटवीप्रदे[5]शेषु फलपुष्पाद्यलङ्कृते ।
पर्वते विजने साध्यं[6] सर्वसिद्धिसमुच्चयम् ॥

॥ मँ[7] ॥

कायवाक्चित्तवज्रेषु मञ्जु[8]वज्रप्रभावना ।
स्फरणं कायवाक्चित्ते मञ्जुवज्रसमो भवेत्[9] ॥
योजनशत[10]विस्तारं प्रभया दीप्त[11]वज्रया ।
आ[12]भासयति सिद्धा[13]त्मा सर्वा[14]लङ्कारभूषितः ॥
ब्रह्मरुद्रादयो देवा न पश्यन्ति कदाचन ।

॥ मञ्जुश्रीवज्राग्रसमयान्तर्द्धान[15]करी नाम समाधिः ॥

विण्मूत्रपञ्चसमयैस्त्रि[16]वज्राभेद्यसम्भवैः ।
कृत्वा त्रिलोहसहितं मुखे प्रक्षिप्य भावयेत् ॥
अभेद्यं सर्वबुद्धानां चित्तं तत्र[17] प्रभावयेत् ।
स भवेत्तत्क्षणादेव[18] मञ्जुवज्रसमप्रभः ॥

1. C भ्रष्टा । 2. C ° हरेत् । 3. A खधातुसमयतुल्येषु । 4. C ° ल्पे षु । 5. C ° वे ° । 6. A जिनसाध्यस्थं । 7. A मूँ । 8. A वज्रं । 9. A समुद्भवेत् । 10. A ° सङ्ग ° । 11. C मञ्जु ° । 12. B अव ° । 13. A दीप्ता ° । 14. A सङ्घा ° । 15. B ° त्तद्बोध ° । 16. B ख ° । 17. A ततः । 18. A ° दक्षयो देवो ।

स्वमन्त्रेण प्रभावित्वा चक्रं स्फुलिङ्गसुप्रभम् ।
आलयं सर्वबुद्धानां ध्यात्वा बुद्धसमो भवेत् ॥
षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः[1] ।
भवन्ति तस्यानुचराः सर्ववज्रधरोपमाः ॥

॥ चक्रसमयो नाम समाधिः ॥

स्वमन्त्रेण महावज्रं ध्यात्वा मण्डलमध्यतः ।
आलयं सर्व[2]वज्राणां चित्तवज्रसमो भवेत् ॥
षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः ।
योषितस्तस्य तावन्त्यो भविष्यन्ति गुणालयाः ॥
त्रैधातुकमहावज्रो भवेद्रुद्र[3]नमस्कृतः ।

॥ वज्रसमता नाम समाधिः ॥

पद्मं स्वमन्त्रवज्रेण ध्यात्वा अष्टदलं महत् ।
आलयं सर्वधर्माणां चिन्त्य[4] धर्मसमो भवेत् ॥
षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः ।
संस्थापयति[5] शुद्धात्मा बुद्धपूजा[6]ग्रमण्डले ॥

॥ पद्मसमता नाम समाधिः ॥

तिष्ठेत् त्रिकल्पसमयं सेवयन् पञ्चज्ञानिनाम् ।
दशदिक्सर्वबुद्धानां त्रिगुह्यं पर्यु[7]पासते ॥
स्वमन्त्रं भावयेत् खड्गं[8] पञ्चरश्मिसमप्रभम्[9] ।
पाणौ गृह्य विशालाक्षः [10]वज्रविद्याधरो भवेत् ॥

1. A adds योषितस्तस्य तावन्त्यो भविष्यन्ति गुणालयाः । त्रैधातुकमहावज्रो भवेद्रुद्रनमस्कृतः । 2. A चित्त ° । 3. AC ब्रह्मरुद्र ° । 4. A सर्व ° । 5. A ° पर्येत्त्रि ° । 6. A ° वज्रा ° । 7. A पूज्यमु ° । 8. A भगं । 9. B ° माकुलम् । 10. B त्रिव ° ।

त्रैधातुकमहापूज्यो दैत्यब्रह्मेन्द्रनमस्कृतः।
त्रिसाहस्र[1]महाशूरो भवेद्ब्रह्मनरोत्तमः॥
यदभिलषति[2] चित्तेन कायवाक्चित्तवज्रिणः।
ददाति तादृशीं सिद्धिं चित्तवज्रप्रभाविताम्॥

॥ सर्वखड्गोत्तमो नाम समाधिः॥

ओँकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः।
मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत्॥
स भवेत्तत्क्षणादेव बोधिसत्त्व[3]समप्रभः।
[4]उदितादित्यसङ्काशो जाम्बूनदसमप्रभः॥
आःकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः।
[5]मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत्॥
स भवेत्तत्क्षणादेव बोधिचित्त[6]समप्रभः।
[4]उदितादित्यसङ्काशो जाम्बूनदसमप्रभः॥
हूँकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः।
मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत्॥
स भवेत्तत्क्षणादेव वज्रकायसमप्रभः।
उदितादित्यसङ्काशो जाम्बूनदसमप्रभः॥
खधातुस्वच्छमध्यस्थं वैरोचनं प्रभावयेत्।
हस्ते चक्रं प्रभावित्वा चक्रविद्याधरो भवेत्॥
महाचक्रकुलं ध्यात्वा दृढं चक्रा[7]ग्रसाधनम्।
कर्त्तव्यं ज्ञानवज्रेण चक्र[8]कायाग्रयोगतः[9]॥

1. A °स्रैक°। 2. A °लषित°। 3. AC °चित्त°। 4. B omits this line. 5. omitted in A and C. 6. B °ज्ञान°। 7. A ज्ञाना°। 8. A बुद्ध°। 9. A °जनात्।

खधातुवज्रमध्यस्थं ज्ञाना[1]ग्नौम्यं विभावयेत् ।
हस्ते वज्रं प्रभावित्वा वज्रविद्याधरो भवेत् ॥
महावज्रकुलं ध्यात्वा इदं वज्राग्रसाधनम् ।
कर्त्तव्यं ज्ञानवज्रेण वज्रकायाग्रयोगतः ॥
खधातुरत्नमध्यस्थं रत्नवज्रं प्रभावयेत् ।
हस्ते रत्नं प्रभावित्वा रत्नविद्याधरो भवेत् ॥
महारत्नकुलं ध्यात्वा इदं रत्नाग्रसाधनम् ।
कर्त्तव्यं ज्ञानवज्रेण रत्नकायाग्रयोगतः[2] ॥
खधातुपद्म[3]मध्यस्थं अमिताभं[4] प्रभावयेत् ।
हस्ते पद्मं प्रभावित्वा पद्मविद्याधरो भवेत् ॥
महापद्मकुलं ध्यात्वा इदं पद्माग्रसाधनम् ।
कर्त्तव्यं ज्ञानवज्रेण धर्मकायप्रयोगतः ॥
खधातुसमयमध्यस्थं अमोघाग्रं प्रभावयेत् ।
हस्ते खड्गं प्रभावित्वा खड्गविद्याधरो भवेत् ॥
महासमयकुलं ध्यात्वा इदं समयाग्रसाधनम्[5] ।
कर्त्तव्यं ज्ञानवज्रेण कायसमययोगतः ॥
त्रिशूलज्ञाना[6]ङ्कुशादयः साध्या वज्रप्रभेदतः ।
सिध्यन्ति तस्य ध्यानेन कायवाक्चित्तसाध[7]नैः ॥

इत्याह भगवान् महासमयसिद्धि[8]वज्रः ।

चतुष्पथैकवृक्षे वा एकलिङ्गे शिवालये ।
साधयेत् साधको नित्यं वज्राकर्षं विशेषतः ॥

1. A °ला° । 2. A repeats from खधातुवज्रमध्यस्थं etc. to कर्त्तव्यं ज्ञानवज्रेण in this line. 3. C °धर्म° । 4. C °युं । 5. AC °भावनं । 6. B °ज्वाला° । 7. C °भाव° । 8. A सिद्धिसमय° ।

त्रियोगमन्त्रपुरुषं ध्यात्वा त्रियोगवज्रिणम्।
अङ्कुशं कायवाक्चित्तं बुद्धानां ज्ञानबुद्धिनाम्॥
वायव्यमण्डलाग्रस्थं[1] बुद्धाकर्षणमुत्तमम्।
दशदिक्समय[2]सम्भूतं वज्रेणाकृष्य[3] भुञ्जयेत्[4]॥

॥ खधातुसमयवज्राकर्षणम्॥

वैरोचनं महाचक्रं ध्यात्वाङ्कुशं जिनालयम्।
वज्रपद्मादिभिः कार्यं समयाकर्षणमुत्तमम्॥

॥ त्रैधातुकसमयाकर्षणम्[5]॥

सर्वाकारवरोपेतं बुद्धबिम्बं विभावयेत्।
पाणौ च कायवाक्चित्तं अङ्कुशादीनि भावयेत्॥
अनेन खलु योगेन स भवेत्परकर्मकृत्।
सर्वाकारवरोपेतं कायवज्रं विभावयेत्॥
जिह्वावज्रप्रयोगेन ध्यात्वा वाग्वज्रसमो भवेत्।
त्रिगुह्यसमयपूजाग्रीं पूजां पूज्य[6] प्रभावयेत्॥
इदन्तत् सर्वसिद्धीनां सारं गुह्यसमुच्चयम्।

इत्याह भगवान् महागुह्यसमयः।

महामांससमयाग्रेण साधयेत् त्रिवज्रमुत्तमम्।
विण्मूत्रसमयाग्रेण[7] भवेत् विद्याधरः प्रभुः॥
हस्तिसमयमांसेन[8] पञ्चाभिज्ञत्वमा[9]प्नुयात्।
अश्वसमयमांसेनान्तर्द्धानाधिपो[10] भवेत्॥

1. A ° मध्यस्थं, C ° ग्रस्तं। 2. A omits ° समय °। 3. A ° ष्योप °। 4. B भुञ्जते। 5. B repeats. 6. A पूज्यां। 7. A ° योगेन। 8. A ° मांसमयाग्रेण। 9. A ° भिज्ञाः समा °। 10. A अन्तवर्द्धनाधिपति °।

श्वानसमयमांसेन सर्वसिद्धिप्रसाधनम् ।
गोमांससमयाग्रेण वज्राकर्षणमुत्तमम् ॥
अलाभे सर्वमांसानां ध्यात्वा सर्वं[1] विकल्पयेत् ।
अनेन वज्रयोगेन सर्वबुद्धैरधिष्ठ्यते[2] ॥
सर्वाकारवरोपेतं कायवाक्चित्तवज्रिणम् ।
हृदये ज्ञानसमयं मुकुटे वज्राग्रधारिणम् ॥
प्रीणनं सर्वबुद्धानां इदं समयनयोत्तमम् ।
कर्त्तव्यं समयाग्रेण सर्वसिद्धिकरं परम् ॥

॥ सर्वसमयज्ञानवज्राहारो नाम समाधिः ॥

जिह्वा[3]समयवज्राग्रे ध्यात्वा हूँकारवज्रिणम् ।
पञ्चामृतप्रयोगेन वज्रसत्त्वत्वमाप्नुयात्[4] ॥
आःकारोँकारसमयमिदं वज्रनयोत्तमम् ।
अनेन खलु योगेन वज्रसत्त्वसमो भवेत् ॥

॥ समयवज्रामृतमालिनी[5] नाम समाधिः ॥

त्रिवज्रसमयसिद्धार्थं[6] भवेत् त्रिकायवज्रिणः ।
दशदिक्सर्वबुद्धानां भवेच्चिन्तामणयोदधिः ॥
आभासयति वज्रात्मा लोकधातुं समन्ततः ।
चक्रसमयसिद्धान्ते[7] बुद्धकायसमो भवेत् ॥
विचरेत् समन्ततः सिद्धो गङ्गावालु[8]कसर्वतः ।
सर्वेषु समयाग्रेषु विद्याधरप्रभुर्भवेत् ॥

1. A सर्वं । 2. A ° ष्ठिते । 3. AC जिह्वाग्र ° । 4. C समो भवेत्, B त्रिवज्रत्वमाप्नुयात् ° । 5. B ° ली । 6. A ° द्धाग्रे, C ° द्धैर । 7. AB ° सिद्धाग्रे । 8. A ° लि ° ।

सर्वसमयसिद्धाग्रे कायवज्रप्रभावतः।
अन्तर्द्धाने[1]षु सर्वेषु[2] साहस्रैकावभासकः।
हरते सर्वसिद्धीनां[3] भुंक्ते कन्यां[4] सुराग्रजाम् ॥
गंगावालुकसमान् बुद्धांस्त्रिवज्रालयसंस्थितान्।
पश्यते चक्षुर्वज्रेण स्वहस्तैकं यथामलम् ॥
गंगावालुकसमैः क्षेत्रैः ये शब्दाः सम्प्रकीर्त्तिताः।
शृणोत्यभिज्ञावशतः श्रोत्रस्थमिव सर्वतः ॥
गंगावालुकसमैः क्षेत्रैः कायवाक्चित्तलक्षणम्।
स वेत्ति सर्वसत्त्वानां चित्ताख्यं नाटकोद्भवम् ॥
गंगावालुकसमैः कल्पैः संसारस्थितिसम्भवम्।
पूर्वनिवास[5]समयं दिनत्रयमिव स्मरेत् ॥
गंगावालुकसमैः कायैः बुद्धमेघाद्यलङ्कृतैः।
गंगावालुकसमान् कल्पान् स्फरेद्[6] दृढाग्रवज्रिणः ॥

इत्याह भगवान् समयाभिज्ञः। वज्रचक्षुर्वज्रश्रोत्रं वज्रचित्तं वज्रवाणी[7] वज्रऋद्धि[8]श्चेति।

बुद्धाभिज्ञार्थसंसिद्धौ[9] बुद्धकायसमो भवेत्।
गंगावालुकसंख्यैश्च परिवारैः परीवृतः।
विचरेत् कायवाग्वज्रो लोकधातुं समन्ततः ॥
सेवासमयसंयोगमुपसाधनसम्भवम्।
साधनार्थसमयं च महासाधनचतुर्थकम् ॥

1. C ° द्धारे °। 2. A omits. 3. B ° बुद्धानां। 4. B भुंजते च। 5. C निरास। 6. A omits. 7. BC वज्रनिवास। 8. C ° ऋषि °। 9. BC ° सिद्धिसु।

विज्ञाय वज्रभेदेन ततः कर्माणि साधयेत् ।
सेवासमाधिसंयोगं भावयेत् बोधिमुत्तमम् ॥
उपसाधनसिद्ध्यग्रे[1] वज्रायतनविचारणम् ।
साधने चोदनं प्रोक्तं मन्त्राधिपतिभावनम् ॥
महासाधनकालेषु बिम्बं स्वमन्त्रवज्रिणः ।
मकुटेऽधिपतिं ध्यात्वा सिद्ध्यते ज्ञानवज्रिणः ॥
सेवाज्ञानामृते[2]नैव कर्त्तव्यं सर्वतः सदा ।
एषो हि सर्वमन्त्राणां सर्वमन्त्रार्थ[3]साधकः ॥
महाटवीप्रदेशेषु विजनेषु महत्सु च ।
गिरिगह्वरकुलेषु सदा सिद्धिरवाप्यते ॥

इत्याह भगवान् महासाधनवज्रः ।

अथ वज्रचतुष्केन[4] सेवा कार्या[5] दृढव्रतैः ।
त्रिवज्रकायमन्त्रेण[6] भावयन् सिद्धिमश्नुते ॥
चतुःसन्ध्यप्रयोगेन पंचस्थानेषु बुद्धिमान् ।
ओँकारज्ञान[7]वज्रेण ध्यात्वा सम्वरमा[8]विशेत् ॥
दिनानि सप्त पक्षं च मासमप्यब्दमेव च ।
उत्पाद्य वज्रसमयं लघु सिद्धिरवाप्यते ॥
विस्तरेण मया प्रोक्तं दिनभेदप्रचोदतः ।
पक्षाभ्यन्तरतः सिद्धिरुक्ता गुह्याग्रसम्भवैः ॥

तत्रेदमुपसाधनसम्वरविषयम् ।

1. A ° ध्यते । 2. A ° मुच । 3. A तन्त्रतत्त्वार्थ °, C मन्त्रतत्त्वार्थ । 4. A ° ष्कोणे, B वज्राचार्येण । 5. C सर्वा काया । 6. B समेतेन, C समानेन । 7. A omits ° ज्ञान ° । 8. A ° समाधिं ।

बुद्धकायधरः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य करोतु[1] कायवज्रिणः ॥[2]
दशदिक्संस्थिता बुद्धा त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु कायलक्षितम् ॥

तत्रेदं साधनसम्वरविषयम् ॥

धर्मो वै[3] वाक्पथः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य करोतु वाक्य[4]वज्रिणः ॥
दशदिक्संस्थिता बुद्धास्त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं तस्य कुर्वन्तु वाक्पथोद्भवम् ॥

[5]तत्रेदं महासाधनसम्वरविषयम् ।

चित्तवज्रधरः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु चित्तवज्रिणः ॥
दशदिक्संस्थिता बुद्धाः त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु चित्तसम्भवाः[6] ॥
बुद्धो वा वज्रधर्मो वा वज्रसत्त्वोऽपि वा यदि ।
अतिक्रमेद्यदि मोहात्मा स्फुटेयुर्नात्र संशयः ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समयसाधनाग्रनिर्देशपटलो द्वादशोऽध्यायः ।

1. A कुर्वन्तु । 2. This verse is repeated in C. 3. A समाधी । 4. A वाग्° । 5. B omits from तत्रेदं to चित्तसम्भवाः । 6. A वज्रिणः । C repeats दशदिक्संस्थिता to वाक्पथोद्भवम् after this.

## त्रयोदश: पटल: ।

अथ भगवन्त: सर्वतथागता ज्ञानवज्राग्रचारिण: सर्वसत्वार्थसंभूता[1] बोधिसत्वाश्च धीमन्त:[2] प्रणिपत्य महाशास्तारं मुनिं सत्त्वार्थवज्रिणं पूजा[3]समयतत्त्वं वज्रघोषमुदीरयन् ।

अहो बुद्ध[4]नयं दिव्यमहो बोधिनयोत्तमम् ।
अहो धर्मनयं शान्तमहो मन्त्रनयं दृढम् ॥
अनुत्पन्नेषु धर्मेषु स्वभावातिशयेषु च ।
निर्विकल्पेषु धर्मेषु[5] ज्ञानोत्पाद: प्रगीयते ॥
भाषस्व भगवन् रम्यं सर्वधर्म[6]समुच्चयम् ।
वज्रजापं महाज्ञानं त्रिकायाभेद्यमण्डलम् ॥
प्राप्यते बुद्धज्ञानानि त्रिवज्राभेद्यभावनै: ।
जपन् वज्रप्रयोगेन सर्वबुद्धैरधिष्ठ्यते ॥
कुलानां सर्वमंत्राणां कायवाक्चित्तलक्षणम् ।
मंत्रजापं प्रघोषाद्य वज्रजापमुदाहरन्[7] ॥
बुद्धाश्च त्र्यध्वसंभूता: कायवाक्चित्तवज्रिण: ।
संप्राप्ता ज्ञानमतुलं वज्रमंत्रप्रभावनै: ॥ इति ॥
अथ वज्रधर: शास्ता खवज्रज्ञानसंभव: ।
कर्ता स्रष्टा वराग्राग्र्यो वज्रजापमुदाहरत्[8] ॥

1. BC °सम्भोगा: । 2. A वामत: । 3. A सर्वार्थ° । 4. C °धर्म° । 5. AB भूतेषु । 6. AB °मन्त्र° । 7. A शृण्वन्तु ज्ञानसागरा: । 8. C °दीरयेत् ।

सर्वमंत्रार्थजापेषु त्रिवज्राभेद्यलक्षणम्।
त्रिभेदे[1] वज्रपर्यन्तो न्यासोऽयं त्रिवज्रमुच्यते॥

इत्याह च।

त्रिविधं स्फुरणं कार्यं कायवाक्चित्तसन्निधौ[2]।
अनेन जापवज्रेण वज्रचित्तसमो भवेत्॥
[3]बुद्धानां कायवाक्चित्तं ध्यात्वा पूजाप्र[4]कल्पनम्।
कर्त्तव्यं ज्ञानवज्रेण इदं बोधिसमावहम्[5]॥
अथवा स्फुरणं कार्यं त्रिभेदेन प्रति प्रति।
कायवाक्चित्तनैरात्म्यं ज्ञानचित्तेन संस्फ[6]रेत्॥
उच्चारयन् स्फरेद्वज्रं समाप्तौ संहारमादिशेत्।
इदन्तत् सर्वबुद्धानां ज्ञानोन्मीलितचक्षुषाम्॥
कायवज्राभिसम्बोधिं भावाभावविचारणम्।
बुद्धकाय इति प्रोक्तः कायजापः स उच्यते॥
वाक्य[7]समय[8]संबोधिः शब्दाशब्दविचारणम्।
वाग्वज्र इति प्रोक्तो वाग्जापः स उच्यते॥
चित्तसमयसंबोधिः स्थितिवज्रविचारणम्।
वज्रचित्तमिति प्रोक्तं चित्तजापः स उच्यते॥
अथानुगमजापेन निःस्वभावेन चारुणा।
विचारणं चाध्वबुद्धेभ्यो रत्नजापः स उच्यते॥
स्फरणं कायमेघेन बुद्धक्षेत्रान्समन्ततः।
गमनागमनवज्रार्थममोघजापः स उच्यते॥

1. A °द्य°। 2. A सम्निधौ। 3. These two lines are repeated in C. 4. A °ग्र°। 5. AB त्रिवज्रचित्तसमो भवेत्। 6. B° स्म°। 7. A °क्°। 8. A °याभि°।

शृणोति मन्त्राक्षरपदं स्ववज्रैर्घृष्टमण्डलम् ।
क्रोधसमयज्ञानेन क्रोधजापः स उच्यते ॥
[1]कामार्थं विह्वलीभूतान् सर्वत्राणहितैषिणः ।
मत्वा[2]न्मोहपदे[3] स्थाप्य मोहजाप इति स्मृतः ॥
रागवज्रोद्भवं वाचं कायवाक्चित्तसंस्थिताम् ।
सत्वान्[4] राग[5]पदे स्थाप्य रागजाप इति स्मृतः ॥
द्वेषवज्रोद्भवं चित्तं कायवाक्चित्तसंस्थितम् ।
सत्त्वान् द्वेषालये स्थाप्य द्वेषजापः स उच्यते ॥
त्रिवज्रसमयं तत्त्वं मध्यमं समयवज्रिणाम् ।
तदेव सर्व[6]वज्राणां जापो नपुंसक उच्यते ॥
वज्राधिपतयः सर्वे रागतत्वार्थचिन्तकाः[7] ।
कुर्वन्ति रागजां बोधिं सर्वसत्वहितैषिणीम् ॥
लोचनाद्या महाविद्या नित्यं कामार्थतत्पराः ।
सिध्यन्ति कामभोगैस्तु[8] सेव्यमानैर्यथेच्छतः ॥
मोहसमयसम्भूता[9] विद्याराजानो वज्रिणः ।
नपुंसकपदे सिद्धाः ददन्ति सिद्धिमुत्तमाम् ॥
क्रोधा द्वेषालये जाता नित्यं मारणतत्पराः[10] ।
सिध्यन्ति मारणार्थेन सेव्यमानैर्यथेच्छतः[11] ॥

इत्याह भगवान् महापुरुषसमयः ।

1. This line is incomplete in A. 2. C सर्वा ° । 3. C ° दं । 4. C सर्वान् । 5. C रागोदधि ° । 6. C समय ° । 7. C ° भावकाः । 8. C ° भोगेन । 9. A ° सुव्रता । 10. A has क्रोधात् द्वेषालये जाता नित्यं सिध्यन्ति मारणाः । 11. This line is incomplete in A.

हृदि मध्यगतं चक्रं भावयेत् ज्ञानवज्रि[1]णाम्।
स्वच्छमण्डलमध्यस्थं चक्रमन्त्रार्थ[2]भावना ॥
हृदि मध्य[3]गतं वज्रं[4] भावयेत् ज्ञानवज्रिणः।
वज्रमण्डलमध्यस्थं वज्रमंत्रार्थभावना ॥
हृदि मध्यगतं रत्नं भावयेत् रत्नज्ञानिनः।
रत्नमण्डलमध्यस्थं रत्नमंत्रार्थभावना ॥
हृदि मध्यगतं पद्मं भावयेत् पद्मज्ञानिनः।
धर्ममण्डलमध्यस्थं पद्ममंत्रार्थभावना ॥
हृदि मध्यगतं खड्गं भावयेत् खड्गज्ञानिनः।
समयमण्डलमध्यस्थं खड्गमंत्रार्थभावना ॥
सर्वमण्डलपार्श्वेषु सर्वबुद्धान्निवेशयेत्।
पंचरश्मिप्रभेदेन[5] स्फारयन्[6] बोधिमाप्नुते ॥
स्फुरणं सर्वमंत्राणां द्विधाभेदेन कीर्तितम्।
त्रिकायवज्रभेदेन संहारस्फरणं भवेत् ॥
कायस्वभावं कायेन चित्तं चित्तस्वभावतः।
वाचं वाचस्वभावेन पूज्य पूजामवाप्नुयात् ॥
महामण्डलचक्रेण पंचवज्रविभावना।
मध्ये त्वधिपतिं ध्यात्वा स्वबिम्बं त्रिकायवज्रिणाम् ॥
बिम्बं स्वमंत्रवज्रस्य मण्डलानां चतुष्टयम्[7]।
चतुर्वर्णेन संकल्प्य हृदि मंत्रार्थभावना ॥
वज्रचतुष्टयं कर्म[8] करोति ध्यानवज्रिणः।
एषो हि सर्वमंत्राणां रहस्यं परमशाश्वतम् ॥

1. C °चक्रि°। 2. मध्यचक्रार्थ°। 3. B वज्र°। 4. B चक्रं। 5. C °प्रदेशेन। 6. AC °येत्। 7. AB °ये। 8. A °यमिदं।

शान्तिके लोचनाकारं पौष्टिके पद्मवज्रिणम् ।
वश्ये वैरोचनपदं वज्रक्रोधोऽभिचारके ॥
इदं तत् सर्वमंत्राणां गुह्यं त्रिकायसंभवम् ।
निर्मितं ज्ञानवज्रेण क्रियानाटकलालितम् ॥
अभक्तिवादिनः सत्वा निन्दकाचार्यवज्रिणे ।
अन्येषामपि दुष्टानामिदं कार्यं प्रचोदनम् ॥

इत्याह भगवान् महाज्ञानचक्रवज्रः ।

त्रैधातुकस्थितान्सर्वान् बुद्धकाये[1] विभावयेत् ।
सम्पुटोद्घाटिता[2]न् कृत्वा ततः कर्मप्रसाधनम् ॥
खधातुमध्यगं वज्रं पंचशूलं चतुर्मुखम् ।
सर्वाकारवरोपेतं वज्रसत्वं विभावयेत् ॥
त्र्यध्वसमयसंभूतं बुद्धचक्रं विभावयेत् ।
दक्षपाणाविदं कार्यं बुद्धचक्रं महाबलम् ॥
सत्वान् दशदिक्संभूतान् बुद्धकायप्रभेदतः ।
संहृत्य पिण्डयोगेन स्वकाये तान् प्रवेशयेत् ॥
स्फुरणान्तु पुनः कार्यं बुद्धानां ज्ञानवज्रिणाम् ।
क्रुद्धान् क्रोधाकुलान् ध्यात्वा विकटोत्कटभीषणान् ॥
नानाप्रहरणहस्ताग्रान् मारणार्थाग्रचिन्तकान् ।
घातयन्तो महादुष्टान् वज्रसत्वमपि स्वयम् ॥
बुद्धास्त्रिकायवरदाः त्रिवज्रालयमण्डले ।
ददाति सिद्धिं मोहात्मा म्रियते नात्र संशयः ॥
दिनानि सप्तेदं कार्यं बुद्धस्यापि न सिध्यति ।

1. B स बुद्धान् । 2. A सम्पूर्णं घोटितं, C सम्पुटोद्योतिकां ।

॥ वज्रसमयाज्ञाचक्रो नाम समाधिः ॥

खधातुमध्यगं चक्रं वज्रज्वालाविभूषितम्।
सर्वाकारवरोपेतं वैरोचनं प्रभावयेत्॥
त्र्यध्वसमयसंभूतान् वज्रसत्त्वान् महायशान्।
वज्रं स्फुलिङ्गगहनं पाणौ तस्य विभावयेत्॥
सत्त्वान् दशदिक्[1]संभूतान् वज्रकायप्रभेदतः।
संहृत्य रश्मियोगेन स्वकाये तान् प्रवेशयेत्॥
स्फुरणं सर्ववज्राणां कार्यं ज्ञानाग्रबुद्धिना[2]।
शृण्वन्तु सर्वबुद्धात्मा कायवाक्चित्तयोगिनः[3]॥
अहं वज्रधरः श्रीमान् आज्ञाचक्रप्रभेदतः।
वज्रेणादीप्तवपुषा स्फारयामि त्रिकायजान्॥
लंघयेद्यदि समयं विशीर्यते न संशयः।

॥ चक्रसमयाज्ञावज्रो नाम समाधिः॥

खवज्रमध्यगं चिन्तेद्बुद्धमण्डलवज्रिणम्।
यमान्तकं महाचक्रं खवज्राख्यं प्रकल्पयेत्॥
बुद्धांश्च त्र्यध्वसंभूतान्[4] प्रविष्टांस्त्रिकायमण्डले।
पुनः संस्फारयेद्बुद्धान् यमान्तकाकारसन्निभान्॥
सत्त्वांश्च त्र्यध्वसम्भूतान् रिपूणां दुष्टचेतसाम्।
घातितान् भावयेत् क्रुद्ध इदं वज्राज्ञामण्डलम्॥

॥ सर्वसमयसंभवयमान्तकसमान्य[5]त्रिकायाज्ञावज्रो नाम समाधिः॥

1. A ° दिशि। 2. AC ° वस्तुना। 3. A ° योगतः। 4. B ° सत्त्वांश्च। 5. AB omit ° समान्य °।

कायवाक्चित्तवज्रैस्तु स्वमन्त्रार्थगुणेन वा ।
अथवा [पौष्प][1]समये आज्ञाचक्रप्रवर्त्तनम्[2] ॥
रक्षार्थं सर्वमन्त्राणां कार्यं ज्ञानाग्रवज्रिणाम् ।
इदं तत् सर्वबुद्धानां बोधिरक्षार्थमुच्यते ॥

इत्याह भगवान् बोधिचित्तः ।

स्ववज्रमध्यगं धर्मं वैरोचनाग्रसंभवम् ।
ध्यात्वा त्रिकायवज्राग्रं[3] आसनन्तु प्रकल्पयेत् ॥
खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत् ।
मन्त्राक्षरपदं ज्ञानं चित्ताकारं प्रकल्पयेत् ॥
पुनस्तु संस्फरेत् बुद्धान् चित्तवज्रप्रभावितान्[4] ।
चित्तवज्रमिति कृत्वा त्रिकाये तान् प्रवेशयेत् ॥

इत्याह भगवान् स्ववज्रसमयः ॥ वज्रमन्त्ररत्नप्रद्योतकरो नाम समाधिः ॥

सर्वाकारवरोपेतं वज्रसत्त्वं विभावयेत् ।
बुद्धांस्तु क्रमशः स्थाप्य जलस्योपरि चंक्रमेत्[5] ।
समयोदकप्रयोगेन मूर्ध्नि पादविभावनम् ॥

इत्याह भगवान् स्वभावशुद्धः ।। वज्रोदधिपदाक्रान्तो नाम समाधिः ।।

माहेन्द्रमण्डलं ध्यात्वा मध्ये क्रोध[6]कुलं न्यसेत् ।
कर्मवज्रपदाक्रान्तं मूर्ध्नि तस्य विभावयेत् ॥

इत्याह च ।। सर्वतीर्थप्रवा[7]दिस्तम्भनवज्रो नाम समाधिः ॥

1. A ° त्पौष °, B पौष °, C ° प्लौष ° (?) । 2. A ° प्रयोजनम् । 3. A त्रिकायं, C त्रिवज्राग्रं । 4. C ° विना । 5. C कल्पयेत् । 6. B ° धा ° । 7. BC परवा ° ।

क्रोधाकारं त्रिवज्राग्रान् पीतकिंजल्कसन्निभान् ।
गिरिराज इव सर्वान् ध्यात्वा मूर्ध्नि प्रभावयेत् ।
बुद्धसैन्य[1]मपि स्तम्भे[2] म्रियते नात्र संशय: ॥

इत्याह भगवान् सर्वतथागतकायवाक्चित्तसंभव: ॥ सर्व-सैन्यस्तम्भनो नाम समाधि: ॥

रिपुसन्त्रासनसमये इदं ध्यानं प्रकल्पयेत् ।
अतिक्रमेद्यदि बुद्ध: स्फुटते नात्र संशय: ॥

इत्याह भगवान् त्रिवज्रसमय: ।

हूँकारकीलकं ध्यात्वा पञ्चशूलप्रमाणत: ।
वज्रकीलं कृतं तेन हृदये तद्विभावयेत् ।
बुद्धसैन्यमपि क्रुद्धं नाशं गच्छेन्न संशय: ॥

॥ रिपुमहापहारो[3] नाम समाधि: ॥

नगरे वाऽप्यथवा ग्रामे विषये वा प्रयोजयेत् ।
अनेन नित्यं भवेत् शान्ति: सर्वरोगविवर्जिता ॥
अन्तरिक्षगतं वज्रं पञ्चशूलं प्रभावयेत् ।
कल्पोद्दाहमिव ध्यात्वा पुन: संहारमादिशेत् ॥
स्फुरणं च पुन: कार्यं रत्नचिन्तामणिप्रभै: ।
भावयेत् धर्ममेघान्[4] वै अभिषेकं समादिशेत् ॥
अनेन ध्यानवज्रेण दुष्पूरोऽपि प्रपूर्यते[5] ।
स भवेत् चिन्तामणि: श्रीमान् दानवज्रप्रसाधक: ॥
बुद्धमेघैर्महाधर्मैर्वज्रसत्त्वैश्च तत् स्फुरेत् ।

1. B ° संघ ° । 2. ABC त्रस्ते । 3. BC ° मोहापहो । 4. AB ° संघान् । 5. C ° रयेत् ।

विकल्पासंख्येयस्थानं सर्वबुद्धैरधिष्ठ्यते ।
इदं तत् सर्वबुद्धानां कायगुह्यमनाविलम् ॥

॥ सर्वसत्त्वरोगापनयनवज्रसंभवो नाम समाधिः ॥

ध्यानवज्रेण समादानं यत्र स्थाने समाचरेत् ।
अनेन ध्यानयोगेन तिष्ठन् बुद्धैरधिष्ठ्यते ॥
ध्वजामृतमहाराजं वज्रकीलं प्रभावयेत् ।
निखनेद्दशदिक्चक्रं स्फुलिंगज्वालसन्निभम् ॥

इत्याह च ॥ जगद्विजयशान्तिवज्रो नाम समाधिः ॥

खधातुमध्यगं चिन्तेत् शान्तिमण्डलमुत्तमम् ।
बिम्बं वैरोचनं ध्यात्वा हृदयेऽथ प्रविन्यसेत् ॥
खधातुं लोचनाग्रैश्च[1] परिपूर्णं विभावयेत् ।
संहृत्य रश्मिपिण्डेन आरम्भस्य निपातने[2] ॥
रोमकूपाग्रविवरैर्बुद्धमेघान् स्फरेत् व्रती[3] ।
अभिषेकं तदा तस्य बुद्धमेघा ददन्ति हि ।
अनेन वज्रसमयः श्रीमान् भवति तत्क्षणात् ॥

॥ बुद्धसमयमेघ[4]व्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् माहेन्द्रमण्डलं शुभम् ।
बिम्बं धर्मपरं[5] ध्यात्वा हृदये वाऽथ विन्यसेत् ॥
खधातुभवनं[6] रम्यं पाण्डराद्यैः प्रपूरयेत् ।
[7]संहरेत् रश्मिपिण्डेन रत्नचिन्तामणिप्रभम् ॥

1. AB ° स्तु । 2. AC ° तयेत् । 3. C बुधः । 4. C omits ° मेघ ° । 5. A °धरं ° । 6. AB ° ने । 7. Two lines from here are repeated in B and C.

कायवाक्चित्तनिलयेऽर्थिने[1] तच्च निवेदयेत् ।
रोमकूपाग्रविवरे रत्नमेघान् स्फरेत् व्रती ॥
भावयेत् धर्ममेघान्वै अभिषेकं समादिशेत् ।
अनेन ध्यानवज्रेण दुष्पूरोऽपि प्रपूर्यते[2] ।
स भवेत् चिन्तामणिः श्रीमान् दानवज्रप्र[3]साधकः ॥

॥ धर्मसमयमेघव्यूहो नाम समाधिः ॥

खधातुमध्यगं चिन्तेत् वज्रचन्द्रार्थ[4]मण्डलम् ।
बिम्बं खवज्रधर्माग्रमर्थिनो हृदि वि[5]न्यसेत् ॥
बुद्धैश्च बोधिसत्त्वैश्च परिपूर्णं खमण्डलम् ।
पञ्चरश्मिप्रयोगेण तेजस्तत्र निपातयेत् ॥
स भवेत् तत्क्षणादेव सर्वबुद्धमनोज्ञकः ।
मञ्जुश्रीतुल्यसङ्काशः स भवेत् पर[6]कर्मकृत् ॥
ददाति च प्रहृष्टात्मा अभिषेकं महोत्सुकः ।
वशमानयति जनान् सर्वान्[7] दर्शनेनैव चोदितान्[8] ॥

॥ रत्नसमयमेघव्यूहो नाम समाधिः ॥

खवज्रं राक्षसैः क्रूरैश्चण्डैः क्रोधसुदारुणैः ।
शृगालैर्विविधैः काकैर्गृध्रैः श्वानैः प्रभावयेत् ॥
आग्नेयमण्डलस्थं तु[9] भावयेत् रिपवः सदा ।
अपकारी सर्वबुद्धानां ध्यात्वा योगं प्रयोजयेत् ॥
अन्त्रमज्जारुधिराद्यं सर्वाकृष्टं प्रभावयेत् ।
नानाप्रहरणधरैराक्रान्तो[10] म्रियते रिपुः ॥

1. C1 ° र्थिनेदं, C2 A ° र्थिनं तु । 2. B ° पूरयेत् । 3. C ° ज्ञार्थ ° । 4. C ° र्क ° । 5. A हृदये । 6. A ° द ° । 7. AC जगत् सर्वं । 8. AC ° तः । 9. A ° लंस्तत्र । 10. AB add प्रभावयेत् ।

बुद्धो वज्रधरो वापि यद्यनेन प्रभाव्यते ।
पञ्चाभ्यन्तरपूर्णेन म्रियते नात्र संशयः ॥

॥ वज्रमेघसमयव्यूहो नाम समाधिः ॥

त्रिमुखं वैरोचनं चिन्तेत् शरत्काण्डसमप्रभम् ।
सितकृष्णमहारक्तं जटामुकुटमण्डितम् ॥
त्रिमुखं वज्रिणं चिन्तेत्कृष्णरक्तसिताननम् ।
जटामुकुटधरं दीप्तं लोकधातुसमाकुलम् ॥
त्रिमुखं रागिणं चिन्तेद्रक्तकृष्णसिताननम् ।
जटामुकुटसंभोगं भावयन् सिध्यते ध्रुवम् ॥
चक्रं वज्रं महापद्मं सव्य[1]पाणौ विभावयेत् ।
षड्भुजान् भावयेत् वज्रान्नानाप्रहरणधरान् शुभान् ॥
लोचनां त्रिमुखां चिन्तेत् सर्वसत्त्वहितैषिणीम् ।
सितकृष्णमहारक्तां चारुरूपां विभावयेत् ॥
स्ववज्रनेत्रीं महाराज्ञीं त्रिमुखां भावयेत्सदा ।
कृष्णरक्तसिताकारां चारुरूपां विभावयेत् ॥
वाग्वज्रीं च[2] महाराज्ञीं त्रिमुखां भावयेत्सदा ।
रक्तसितकृष्णाकारां चारुवर्णां विभावयेत्[3] ।
वज्रोत्पलधरां विद्यां त्रिमुखां कान्तिसुप्रभाम् ॥
पीतकृष्णसिताकारां भावयन् ज्ञानमाप्नुयात् ।
यमान्तकं महाक्रोधं त्रिमुखं क्रुद्ध[4]सुप्रभम् ॥
भयस्यापि भयं तीक्ष्णं कृष्णवर्णं विभावयेत् ।
अपराजितं महाक्रोधमट्टाट्टहासनादिनम् ॥

1. A ° दक्षिण ° । 2. ° ज्र A नेत्रीं । 3. These two lines are repeated in A and C. 4. A ° कुल ° ।

त्रिमुखं स्फुलिंगगहनं विस्फुरन्तं विचिन्तयेत् ॥
हयग्रीवं महाक्रोधं कल्पोद्दाहमिवोद्भवम् ।
त्रिमुखं दुष्टपदाक्रान्तं भावयेत् योगतः सदा ॥
वज्रामृतं महाक्रोधं स्फुलिंगाकुलचेतसम् ।
दीप्तवज्रनिभं क्रूरं भयस्यापि भयप्रदम्[1] ॥
टक्किराजं महाक्रोधं त्रिमुखं त्रिभयप्रदम् ।
चतुर्भुजं भयस्याग्रं टक्किराजं प्रभावयेत् ॥
महाबलं महावज्रं त्रैलोक्यार्थार्थधारिणम्[2] ।
नाशकं सर्वदुष्टानां त्रिमुखं भावयेत् सदा[3] ॥
नीलदण्ड'[4] महाक्रोधं[5] त्रैलोक्यस्य भयप्रदम्[6] ।
त्रिमुखं त्रिवज्रसंभूतं तीक्ष्णज्वालं प्रभावयेत् ॥
वज्राचलं महाक्रोधं किंकरं वज्रसंभवम् ।
खड्गपाशधरं सौम्यं त्रिमुखं भावयेत् व्रती ॥
एकाक्षरं[7] महोष्णीषं विस्फुरन्तं समन्ततः ।
त्रिमुखं वज्रिणां[8] दीप्तं भावयेत् ध्यानमण्डले ॥
शुम्भं ज्ञानाग्रधरं क्रूरं भयोदधिसमप्रभम् ।
त्रिमुखं ज्वालार्चिवपुषं भावयेत् ध्यानसुप्रभम् ॥
तेजोराशिजयोष्णीषं ये चान्ये मन्त्रवज्रिणः ।
एभिः समयसंभोगैर्भावनीयाः प्रति प्रति ॥
अमितानि समाधीनि मन्त्राणां समुदाहृताः[9] ।

1. B भयंकरं । 2. A ° क्यधातुहारिणम्, C ° क्यार्थान्तहारिणम् । 3. In B and C the descriptions of वज्रामृत and टक्किराज follow this line. 4. A adds च । 5. C ° कायं । 6. C भयंकरं । 7. B ° न्तरं । 8. C चक्रिणां । 9. B ° दीरयेत् ।

एकैकस्य तु क्रोधस्य बहुत्वे तु विशिष्यते ॥

खधातुमध्यगं चिन्तेत् स्वच्छमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वैरोचनं प्रभावयेत् ॥
स्वच्छं चन्द्रनिभं शान्तं नानारश्मिसमप्रभम् ।
आदर्शमिव संभूतं त्रैधातुकस्य मण्डलम् ।
सर्वालङ्कारचितं ध्यात्वा बोधिं स पश्यति ॥
अनेन बुद्धमाहात्म्यं सर्वलोक[1]वशंकरम् ।
प्राप्यते जन्मनीहैव ध्यानवज्रप्रभावनैः ॥

॥ वैरोचनसमय[2]संभवचारुवज्रो नाम समाधिः ॥

खधातुमध्यगं चिन्तेत् वज्रमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वज्रसत्त्वं विभावयेत् ॥
स्वच्छकायनिभं क्रुद्धं नानाज्वालभयप्रदम् ।
सर्वाकारवरोपेतं सर्वालङ्कारभूषितम् ।
ध्यात्वा ज्ञानपदं शान्तं लघु वज्रत्व[3]माप्नुयात् ॥
अनेन वज्रमाहात्म्यं सर्वसत्त्ववशंकरम् ।
प्राप्यते जन्मनीहैव ध्यानवज्रप्रयोगतः[4] ।

॥ सर्ववज्रसमयसंभवचारुवज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेद्धर्ममण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा धर्मसत्त्वं[5] विचिन्तयेत् ॥
स्वच्छकायधरं सौम्यं सर्वालङ्कारभूषितम् ।
रश्मिमेघमहाचक्रं[6] विस्फुरन्तं प्रभावयेत् ॥

1. A °सत्त्व°। 2. A omits °समय°। 3. A °सत्त्व°। 4. AC °प्रचोदितः। 5. A तत्त्वं। 6. A °वज्रं।

अनेन धर्ममाहात्म्यं त्रिकायाभेद्यसम्भवम्।
प्राप्यते जन्मनीहैव ज्ञानोदधिविभूषणम्॥

॥ धर्मसत्व[1]समयसंभवचारुवज्रो नाम समाधिः॥

खवज्रमध्यगं चिन्तेत् चक्र[2]मण्डलमुत्तमम्।
बुद्धबिम्बं प्रभावित्वा लोचनाग्रीं विभावयेत्॥
चारुवक्त्रां विशालाक्षीं नानाभरणभूषिताम्।
सर्वलक्षणसंपूर्णां त्रिकायाग्र[3]धारिणीम्[4]॥
पाणौ प्रभावयेत् चक्रं त्रैधातुकवशङ्करम्।
सर्वसिद्धिकरं ज्ञानं चक्रं चिन्तामणिप्रदम्॥

॥ लोचनासमयाज्ञानहस्ताग्रवती नाम समाधिः॥

खवज्रमध्यगं चिन्तेत् चन्द्र[5]मण्डलमुत्तमम्॥
बुद्धबिम्बं प्रभावित्वा खवज्राग्रीं प्रभावयेत्।
चारुवक्त्रां विशालाक्षीं नीलोत्पलसमप्रभाम्॥
सर्वलक्षणसंपूर्णां खमायाग्रीं विभावयेत्।
पाणौ नीलोत्पलं चक्रं[6] त्रैधातुकनमस्कृतम्॥
बुद्धबोधिकरं दिव्यं रहस्यं सिद्धिवज्रिणाम्।

॥ खभानुरश्मिमेघवज्राल्हादनवती नाम समाधिः॥

खवज्रमध्यगं चिन्तेद्धर्ममण्डलमुत्तमम्।
बुद्धबिम्बं प्रभावित्वा धर्मवज्रीं प्रभावयेत्॥
चारुवक्त्रां विशालाक्षीं पद्मरागेन्द्रसन्निभाम्।
मायाजालाग्रसंभूतां रागरक्तवरप्रियाम्॥

1. A ° वज्र °। 2. A चन्द्र °। 3. A त्रिमायाग्र,° C त्रियानाग्र °। 4. BC add बुद्धबिम्बं प्रभावित्वा खवज्राग्रीं प्रभावयेत्। after this line. 5. C वज्र °। 6. C रक्तं।

सर्वलक्षणसंपूर्णां सर्वालङ्कारभूषिताम् ।
पाणौ रक्तोत्पलं दिव्यं सर्वबुद्धप्रभावितम् ॥
धर्मज्ञानाकरं दिव्यं गुह्यं समयवज्रिणाम् ।
॥ धर्मसमयतत्वाभिसम्बोधिदर्शनवज्रो नाम समाधिः ॥
खवज्रमध्यगं चिन्तेत् सिद्धिमण्डल[1]मुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा ताराग्रीं तु प्रभावयेत् ॥
चारुवक्त्रां विशालाक्षीं नानाभरणभूषिताम् ।
पीतवर्णनिभां ध्यात्वा स्त्रीशाठ्य[2]मदनोत्सुकाम् ॥
पाणौ प्रभावयेत् व्यक्तं उत्पलं पीतसन्निभम् ।
वज्रसमाधिसंभूतं सर्वसत्त्वनमस्कृतम् ॥
॥ समयताराग्रवती नाम समाधिः ॥
खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा यमान्तकाग्रं विभावयेत् ॥
स्फुलिङ्गगहनं दीप्तं संक्रुद्धं भव[3]मण्डलम् ।
रक्ताक्षं[4] दंष्ट्राविकटं खड्गपाणिं विभावयेत् ॥
मुकुटे वैरोचनपदं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो ज्ञानवज्रिणाम् ॥
॥ यमान्तकस्फुरणावभास[5]व्यूहो नाम समाधिः ॥
खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वाऽपराजिताख्यं प्रभावयेत् ॥
स्फुलिङ्गगहनं दीप्तं सर्प[6]मण्डितमेखलम् ।
विकरालं विकटवक्त्रं[7] सितवर्णं प्रभावयेत् ॥

1. B °लक्षण°। 2. A त्रिसाध्य°। 3. A सूर्य°। 4. A चक्राक्षं।
5. A °सन°। 6. A सूर्य°। 7. C °क्त्रं।

मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो ज्ञानवज्रिणाम् ॥

॥ अपराजितवज्र[1]व्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा हयग्रीवं[2] प्रभावयेत् ॥
स्फुलिङ्गगहनं क्रुद्धं[3] विस्फुरन्तं समन्ततः ।
सर्वदुष्टपदाक्रान्तं रक्तवर्णं[4] विभावयेत् ॥
मुकुटेऽमितसंबुद्धं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो ज्ञानवज्रिणाम्[5] ॥

॥ हयग्रीवोत्पत्ति[6]संभवव्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वज्रामृतं प्रभावयेत् ॥
स्फुलिङ्गगहनं दीप्तं वज्रमेघसमाकुलम् ।
क्रुद्धं सरोषणं कृष्णं तीक्ष्णदंष्ट्रं प्रभावयेत् ॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्यति क्रोधधृक् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥

॥ अमृतसमयसम्भववज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं विभावित्वा टक्किसत्वं प्रभावयेत् ॥
क्रूरं विकृतकेशा[7]ग्रं भयस्यापि भयङ्करम् ।
सर्वालङ्कारसंपूर्णं भावयेत् वज्रसुप्रभम्[8] ॥

1. B omits °वज्र°। 2. BC °वज्रं°। 3. A दीप्तं। 4. A °बिम्बं। 5. C वज्रधारिणाम्, B °चारिणाम्। 6. A °त्पादन°। 7. A देहो°। 8. A °सुत्तमम्।

मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम्[1] ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥

॥ ध्यानवज्रसम्बोधिरतिर्नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा महाबलं प्रभावयेत् ॥
स्फुलिङ्गगहनं दीप्तं विवज्ज्वालयमण्डलम् ।
क्रूरं पाश[2]धरं क्रुद्धं भावयेत् बलवज्रिणम् ॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥

॥ त्रिबलवज्रो[3] नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा नीलवज्रं प्रभावयेत् ॥
कृष्णरूपधरं तीक्ष्णं कृष्णोदधिविवर्धनम् ।
स्फुलिङ्गगहनं दीप्तं भावयेत् दण्डवज्रिणम् ॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टि[4]प्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥

॥ वज्रदण्डसमयाग्रवती नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा अचलाग्रं विभावयेत् ॥
किंकरं विकृतं क्रुद्धं पाशखड्गधराकुलम्[5] ।
स्फुलिङ्गगहनं दीप्तं भावयेदचलवज्रिणम् ॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम् ।

1. C मर्दनं । 2. B पाप ° । 3. A त्रिवज्रमहाबलो । 4. C पुष्टि ° । 5. A ° धरांकुशं ।

एषो हि सर्वक्रोधानां समयो दुरतिक्रमः॥

॥ खवज्रधातु[1]समयपदाक्रान्तो नाम समाधिः॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम्।
बुद्धबिम्बं प्रभावित्वा विद्याचक्रं विभावयेत्॥
सर्वलक्षणसंपूर्णं चक्र[2]ज्वालापरिवृतम्।
उष्णीषचक्रसमयं विस्फुरन्तं प्रभावयेत्॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम्।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः॥

॥ उष्णीष[3]विद्याचल[4]चक्रो नाम समाधिः॥

खवज्र[5]मध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम्।
बुद्धबिम्बं विभावित्वा वज्रसुम्भं प्रभावयेत्॥
तीक्ष्णज्वालार्चिर्वपुषं स्फुरन्तं मेघवज्रिणम्।
वज्रहस्तं महाज्वालं भावयन् सिद्धिमाप्नुयात्॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम्।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः॥

॥ वज्रसमयसुम्भवज्रो नाम समाधिः॥

निरोधक्रोधचक्रेण बुद्धचक्रनिषेविणा[6]।
समाधिवज्रज्ञानानि सिध्यन्ते वज्रमण्डलात्॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समयव्यूहतत्त्वार्थभावनासम्बोधिपटलस्त्रयोदशोऽध्यायः।

1. C omits °धातु°। 2. B वज्र°। 3. A adds °समय°। 4. A °धर°। 5. A °धातु°। 6. A °वर्ण।

चतुर्दशः पटलः ।

अथ भगवान् सर्वतथागतसमयाधिपतिर्महावज्रधरः शान्ति[1]समयाग्रं नाम समाधिं समापद्येमां सर्वतथागतभार्यां कायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ रु रु स्फुरु ज्वल तिष्ठ सिद्धलो[2]चने सर्वार्थसाधनि स्वाहा ॥

अथास्यां गीतमात्रायां सर्वसम्पन्नमनीषिणः ।
तुष्टा हर्षं समापेदे बुद्धवज्रमनुस्मरन् ॥
बुद्धानां शान्तिजननी सर्वकर्मप्रसाधनी ।
मृतसंजीवनी प्रोक्ता वज्रसमयचोदनी ॥

इत्याह च ॥

अथ भगवांस्त्रिकायसमयक्रोधवज्रः भावाभावसमयवज्रं नाम समाधिं समापद्येमां सर्ववज्रधराग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ शङ्करे शान्तिकरे घुट्ट घुट्ट घुट्टनि घातय घातय[3] घुट्टनि स्वाहा[4] ॥

अथास्यां गीतमातायां त्रिवज्राभेद्यवज्रिणः ।
उत्फुल्लचारुनयना वज्रचित्तमनुस्मरन् ॥
रक्षावज्रप्रयोगेषु नित्यं कर्मप्रसाधनी ।
महावज्रभयार्तानां नित्यं बलकरी स्मृता ॥

1. C शास्ता । 2. C रो ° । 3. B omits. 4. A gives घुट्ट घुट्टनि स्वाहा only.

अथ भगवान् महाराग[1]समयावलोकनं नाम समाधिं समापद्येमां धर्मकायाग्रभार्यां स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[2]।

॥ ओँ कटे विकटे[3] कटङ्कटे करोटवीर्ये स्वाहा ॥

अथास्यां गीतमात्रायां वज्रधर्माग्रचा[4]रिणः।
तुष्टा ध्यानं समापेदे वज्रधर्ममनुस्मरन् ॥
धर्मपुष्टिं बलं नित्यं महाकोशवती सदा।
करोति जापमात्रेण वाग्वज्रस्य वचो यथा[5] ॥

अथ भगवान् समन्तसम्भववज्रं नाम समाधिं समापद्येमां समयस[6]त्त्वाग्रभार्यां स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास।

॥ ओँ तारे तुत्तारे तुरे स्वाहा ॥

अथास्यां गीतमात्रायां सर्वबुद्धा महात्मजाः।
हर्षिता ज्ञानमापेदे वज्रकायमनुस्मरन् ॥
बुद्धवज्रमहासैन्यं सत्वधातुं समन्ततः।
करोति दासवत् सर्वं निश्चेष्टं वशकृत् जगात् ॥

इत्याह च ॥

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतो विमलरश्मिमेघव्यूहवज्रं[7] नाम समाधिं समापद्येमं वज्रयमान्तक-महा[8]क्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[9] ॥

॥ नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ ख ख खाहि खाहि सर्वदुष्ट[10]दमक असिमूषलपरशुपाशहस्त चतुर्मुख

1. A °ज°। 2. C °रयत्। 3. AC add निकटे। 4. A धा°। 5. A °धरो यथा। 6. C °त°। 7. B omits °वज्रं and A omits °व्यूह°। 8. B °वज्र°। 9. AB °येत्। 10. A adds °सत्त्व°।

चतुर्भुज षट्चरण आगच्छागच्छ[1] सर्वदुष्टप्राणहारिणि महा-विघ्नान्तक[2] विकृतानन सर्वभूतभयङ्कर अट्टाट्टहासनादिने व्याघ्रचर्मनिवसने[3] कुरु कुरु सर्वकर्माणि छिन्द छिन्द सर्व-मन्त्रान् भिन्द भिन्द परमुद्राणा[4]कर्षय आकर्षय सर्वभूतान् निर्मथ निर्मथ सर्वदुष्टान् प्रवेशय प्रवेशय मण्डलमध्ये वैव स्वतजीवितान्तकर कुरु कुरु मम कार्यं[5] दह दह पच पच मा विलम्ब विलम्ब समयमनुस्मर हूँ हूँ फट् फट् स्फोटय स्फोटय सर्वाशापरिपूरक सर्वान् नाशय रिपून् कर कर[6] हे हे भगवन् किं चिरायसि मम सर्वार्थान् साधय साधय स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वे बुद्धा महायशाः ।
भीताः संत्रस्तमनसो वज्रचित्तमनुस्मरन् ॥
कपालं निर्व्रणं प्राप्य चारुरूपं मनीषिणाम् ।
पादाक्रान्तगतं कृत्वा मन्त्रसेनमनुस्मरन्[7] ॥
लोचनां मामकीं चापि महावज्रकुलोच्चयाम् ।
द्वित्रीन् वारान् समुच्चार्य ध्रुवमाकृष्यते क्षणात् ॥

इत्याह च भगवान् [8]बोधिचित्तवज्रः ॥

अथ भगवान् वैरोचनवज्रस्तथागतः समयरश्मिघ[9]नाग्रं नाम समाधिं समापद्येममममृतसमयवज्रक्रोधं स्वकायवाक्-चित्तवज्रेभ्यो निश्चारयामास ॥

नमः समन्तकायवाक्चित्तवज्राणाम् । नमो वज्रक्रोधाय

1. A गच्छ गच्छ । 2. A विघ्नघातक । 3. C निवेशने । 4. A °मन्त्रा° । 5. B °यं । 6. A adds सर्वाशापरिपूरक । 7. C स्मरेत् । 8. BC omit °बोधि before चित्त । 9. A गह° ।

महादंष्ट्रोत्कटभैरवाय असिमुसलपरशुपाश[1]गृहीतहस्ताय ओँ अमृतकुण्डलि ख ख खाहि खाहि तिष्ठ तिष्ठ बन्ध बन्ध हन हन दह दह गर्ज गर्ज विस्फोटय विस्फोटय सर्वविघ्नविनायकान् महागणपतिजीवितान्तकराय[2] स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वे बुद्धा महायशाः।
मूर्च्छिता भयमापेदे वज्रकाय[3]मनुस्मरन् ॥
सर्वमन्त्रप्रयोगेषु वज्रोच्चाटनकर्मणि।
उच्चाटयति विधिना बुद्धसैन्यमपि स्वयम् ॥

अथ भगवान् रत्नकेतुस्तथागतो बुद्धरश्मिवज्रं नाम समाधिं समापद्येमं वज्रापराजितमहा[4]क्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास।

॥ नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ हूँ जिन-रिटि हे[5] हूँ हूँ फट् फट्[6] स्वाहा॥

अथास्मिन् गीत[7]मात्रे तु सर्वे बुद्धा महायशाः[8]।
भीताः सन्त्रस्तमनसो बोधिचित्तमनुस्मरन् ॥
राक्षसव्याडक्रूरेषु महाभयसमाकुले।
करोति विधिवत् कर्म वज्रचित्तमनुस्मरन्[9] ॥

अथ भगवान् अमितायुस्तथागतोऽमितसम्भववज्रं नाम समाधिं समापद्येमं पद्मसम्भव[10]वज्रक्रोधं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ॥

1. C पाशपरशु ; पर्शु in A. 2. B ° काय। 3. A ° म। 4. BC omit. 5. C ° रितिह, A ° रिटिटादा। 6. B omits. 7. A भाषित °। 8. A ° त्मजाः। 9. C प्रयुञ्जनात्, A प्रपूजनात्। 10. A ° वं नाम महा °।

नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ हूँ हूँ हूँ तरुल विरुल सर्वविषघातक ज्वलितविस्फुलिङ्गाट्टाट्टहास केसरि-सटाटोपटङ्कारवज्रखुर[1]निर्घातन[2]चलितवसुधातल निश्वास-मारुतोत्[3]क्षिप्तधरणीधर भीषणाट्टाट्टहास अपरिमितबल-पराक्रम आर्यगणभीतभूतगणाध्युषित बुद्ध बुद्ध हयग्रीव खाद खाद परमन्त्रान् छिन्द छिन्द सिद्धिं मे दिश[4] आवेशय[4] सर्वज्वरपिपासा[5]दीन् सर्वग्रहेष्वप्रतिहतो भव वज्रदंष्ट्र किं चिरायसि इमं सर्व[6]दुष्टग्रहं दुष्टसङ्घ[7] वा धुन धुन विधुन विधुन मथ मथ मट मट घातय घातय बन्ध बन्ध बुद्धधर्म-सङ्घानुज्ञातकर्म कुरु शीघ्रम्। हयग्रीवाय फट्[8] वज्रगात्राय फट् वज्रनेत्राय फट् वज्रदंष्ट्राय फट् वज्रखु[9]राय फट् वज्रखु[10]र-निर्घातनाय फट् परमन्त्रविनाशाय फट् त्रैलोक्यभयङ्कराय फट् सर्वकर्मेष्वप्रतिहताय फट् वज्रकुलसन्त्रासनाय फट् हूँ हूँ हूँ फट् फट् फट् स्वाहा ॥

अथास्मिन् विनिःसृत[11]मात्रे धर्मवज्रा महाग्रजाः।
भीताः संमूर्च्छमापेदे ज्ञानराजमनुस्मरन् ॥
खधातुं विषसम्पूर्णं वज्रहालाहलप्रभम्।
करोति निर्विषं सर्वं[12] क्रोधराजप्रचोदनैः ॥

इत्याह च।

अथ भगवान् अमोघसिद्धिस्तथागतः अमोघसमय[13]सम्भव-

1. C ॰सुर॰। 2. CB omits ॰चलित॰। 3. C ॰ती। 4. A repeats. 5. AB पिशाचा॰। 6. AB omits. 7. A सर्प॰। 8. C adds वज्राय फट्। 9. A ॰स्व॰। 10. A ॰शर॰। 11. A निश्चारित॰। 12. BC read instead समाधिविधिभेदेन। 13 BC omit.

केतुवज्रं नाम समाधिं समापद्येमं नीलवज्र[1]दण्डक्रोधराजं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास।

॥ नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ एह्येहि भगवन् नीलवज्रदण्ड तुरु तुरु हुलु हुलु हाहा[2] गुलु गुलु गुलापय गुलापय क्रम क्रम भगवन् वायुवेगेन भूतान् शीघ्रं दह दह दर दर वह वह[3] पच पच मथ मथ पातय[4] पातय मट्ट मट्ट मट्टापय मट्टापय सर्वकर्माणि छिन्द छिन्द भक्ष[5] भक्ष मेदमांसरुधिरमत्स्यमेदमज्जाप्रिय एह्येहि भगवन् सर्वविघ्नानि[6] सर्वमन्त्राणि सर्वमूलकर्माणि सर्वमूलग्रहान् हन हन[7] भञ्ज भञ्ज मर्द मर्द इदं मे कार्यं साधय हूँ नीलाय नीलवज्र[8]दण्डाय तुरु तुरु विघ्नविनायकनाशकाय[9] हुरु हुरु दीप्तचण्डाय सर्वशत्रूणां हृदयानि पीड़य छिन्द छिन्द विद्यानां छेदक हूँ[10] विद्यानां शिष्टान् स्मर स्मर समयं वज्रधरवचनं कर्माणि निकृन्तय हूँ हूँ हन हन[11] दह दह कुरु कुरु[12] तुरु तुरु हुरु हुरु[13] फट् फट् हूँ हूँ हूँ भक्षापय कृतान्ताय देवऋषिविद्रापकाय हन हन[14] वज्रदण्डाय[15] स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वदुष्टाग्रसम्भवाः।
भीताः सन्त्रस्तमनसो वज्रसत्त्वमनुस्मरन् ॥

1. C omits ° वज्र °। 2. BC लघु लघु। 3. A has ताट ताट चल चल दह दह instead of वह वह only. 4. A घाटय। 5. BC भक्षय। 6. BC omit सर्वविघ्नानि। 7. C भर, B हर। 8. C omits ° वज्र °। 9. A ° विनायकं नासकाय। 10. A adds महाक्रोधकं हूँ। 11. C हर हर। 12. A हुरु हुरु। 13. AC omit. 14. C हर हर। 15. C ° खिड्गे।

जपेनाष्टशतेनायं क्रोधराजो महायशः ।
घातकः सर्वदुष्टानां विधिचक्र[1]प्रयोजनैः ॥

इत्याह च ।

अथ भगवान् अक्षोभ्यवज्रस्तथागतः समन्तमेघश्रियं नाम समाधिं समापद्येमं महाबलवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओँ हूँ हूँ हूँ फट् फट् फट् ओँ उग्रशूलपाणि हूँ हूँ हूँ फट् फट् फट् ओँ ज्योतिर्निर्णाद हूँ हूँ हूँ[2] ओँ फट् फट् फट्[3] ओँ[4] महाबलाय स्वाहा ।

अथास्मिन् भाषितमात्रे सर्वे नागा महाबलाः ।
भीताः सन्त्रस्तमनसः त्रिकायवज्रमनुस्मरन् ॥
जापमात्रप्रयोगेण सर्वकर्माणि साधयेत् ।
अनावृष्टिसमये च पातयेद्वारिमण्डलम् ॥

अथ भगवान् समन्तनिर्घातवज्रं नाम समाधिं समापद्येमं सर्वतथागतटक्किराजमहाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओँ टक्कि हूँ जः ॥

अथास्मिन् भाषितमात्रे सर्वबुद्धा महात्मजाः ।
भीताः समयमापेदे त्रिवज्रकायमनुस्मरन् ॥

1. A °वज्र° । 2. Twice in C. 3. C omits. Twice in A.
4. Thrice in A. AC add फट् फट् फट् ।

लिङ्गं दक्षिणपादेन[1] वज्रसत्त्व[2]प्रयोगतः।
त्रिवज्रमन्त्रचक्रेण सर्वसत्त्वा[3]कर्षणं भवेत्॥

अथ भगवान् ज्ञानमालाम्बुवज्रं नाम समाधिं समापद्येमं अचलवज्रचण्डसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास।

॥ नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ अचलकारण हूँ हूँ[4] मोट्ट मोट्ट[5] सट्ट सट्ट ह ह मोह मोह सह सह[6] हन हन[7] दह दह तट्ट तट्ट तिष्ठ तिष्ठ आविश आविश महामत्तपालक[8] धुन धुन तिणि तिणि किणि किणि खाद खाद[9] विघ्नान् मारय मारय दुष्टान् भक्ष भक्ष सर्वान्[10] कुरु कुरु किरि किरि महाविषमवज्र स्फोटय स्फोटय हूँ हूँ हूँ नृबलितरंग-[11] नर्त्तक आँ आँ[12] हाँ हाँ[13] अचलचेत[14] स्फोटय स्फोटय ओँ[15] असमन्तिक त्राट् महाबल सातय समयं[16] मँ त्राँ[17] हाँ माँ शुध्यतु वज्री[18] तुष्यतु वज्री नमोऽस्त्वप्रतिबलेभ्यः ज्वालय त्राट् असह नमः स्वाहा॥

अथास्मिन् भाषितमात्रे सर्वे देवाः सकिङ्कराः।
मूर्च्छितास्त्रस्तमनसो मन्त्र[19]कायमनुस्मरन्॥
अनेन क्रोधमन्त्रेण महादेवादयः सुराः।
भीताः सम्पुटकायेन आकृष्यन्ति महर्धिकाः॥

1. C adds क्रान्त्वा। 2. BC वज्रयोग °। 3. A ° मन्त्रा °। 4. Thrice in B. 5. A omits. 6. A सद; C adds हस हस। 7. C हर हर। 8. A ° मन्त्रबालक, C मट्टपालक। 9. C omits. 10. C ° स्वान् °। 11. A ° गा °। 12. C आ। 13. Thrice in B. 14. C adds खाद खाद। 15. A हूँ। 16. A omits. 17. A परमन्त्राणि समयमन्त्रान् ओँ ओँ instead of मँ त्राँ। 18. A लोकं। 19. A वज्र °।

अथ भगवान् समयविजृ[1]म्भितवज्रं नाम समाधिं समापद्येमं सर्ववज्रधरसमयं सुम्भ[2]महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ नमः समन्तकायवाक्चित्तवज्राणाम् । ओँ सुम्भ निसुम्भ[3] हूँ गृह्ण गृह्ण हूँ[4] गृह्णापय गृह्णापय हूँ आनय हो भगवन् विद्याराज हूँ फट् ॥

अथास्मिन् भाषितमात्रे सर्वकन्या महर्धिकाः ।
मुक्तकेशा विवस्त्राङ्गा[5] वज्रसत्त्वमनुस्मरन् ॥
वज्रसत्त्वपदाक्रान्तं सर्वतथागताधिपम् ।
वज्राङ्कुशपाशेन वज्रकन्याकर्षणं परम् ॥

अथ भगवान् महासमयतत्त्वोत्पत्तिवज्रं नाम समाधिं समापद्येदं महासमयवज्रगुह्यवाक्समयतत्त्वपदं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

बुद्धवज्र[6]त्रिकायेषु वज्रसत्त्वविभावना ।
पाशवज्राङ्कुशधरैर्बुद्धाकर्षणमुत्तमम् ॥
बुद्धवाक्काययोगेन महाचक्रप्रयोगतः ।
वज्रसत्त्वो महाराजो ध्रुवमाकृष्यते सदा ॥
चक्रपद्ममहावज्रैः त्रिवज्राभेद्यभावनैः ।
वज्राङ्कुशप्रभेदेन सर्वमन्त्राकर्षणं ध्रुवम्[7] ॥
स्वमन्त्रपुरुषं ध्यात्वा सर्व[8]वज्रमयं शिवम् ।
कन्यां तु मानुषीं श्रेष्ठां हृद्वज्राङ्कुशयोगतः ॥

1. C °स्फ° । 2. B °सम्भव° । 3. C °म्भे । 4. C omits.
5. AC °त्रा । 6. A °ज्रे । 7. A परं । 8. B सत्त्व° ।

वातमण्डलसंयोगि[1] ध्रुवमाकृष्यते सदा।
वैरोचनमहाबिम्बं भावयेच्चन्द्रमण्डलम्॥
शचीं तत्र स्थितां चिन्तेत् वज्रामृतप्रयोगतः।
पञ्चाशवारानुच्चार्य ध्रुवमाकृष्यते सदा॥
वज्राङ्कुशमहाबिम्बं तीक्ष्णाज्वालासमप्रभम्।
वज्रमण्डलकं ध्यात्वा खकन्याकर्षणमुत्तमम्॥
स्वक्रोधवज्रसमयं वज्रपाताल[2]वासिनम्।
शूलवज्राङ्कुशपाशै[3]र्दैत्यकन्याकर्षणमुत्तमम्[4]॥
गौरिकां खटिकां[5] वापि वज्राङ्कुशप्रयोगतः।
चन्द्रोपरागसमये मुखे प्रक्षिप्य साधयेत्॥
ब्रह्मेन्द्ररुद्रदेवानां यस्य नाम[6] समालिखेत्[7]।
आगच्छन्ति भयत्रस्ताः वाक्यवज्रवचो यथा॥
सर्वाकारवरोपेतं मञ्जुवज्रं विभावयेत्।
यमान्तकं महाक्रोधं वज्राङ्कुशं विचिन्तयेत्॥
कल्पोद्दाहमहाचक्रं ध्यात्वा यक्षींस्तु साधयेत्[8]।

इत्याह च॥

मुद्राभेदेन सर्वेषां मन्त्रभेदेन सर्वथा।
आकर्षणपदं प्रोक्तं न चेन्नाशमवाप्नुयात्॥
वज्रसत्त्वो महाराजो चोदनीयो मुहुर्मुहुः।
स एव सर्वमन्त्राणां राजा परमशाश्वतः॥

अथ भगवान् समन्तविजृ[9]म्भितज्ञानवज्रं नाम समाधिं

1. A °लियोगिन। 2, AC °पोतल। 3. A °पदै°। 4. A परं। 5. A omits. C खतिकां। 6. A नामं यस्य। 7. A लिखेत् स्वयम्। 8. A भुञ्जयेत्। 9. C °स्क°।

समापद्येमां वज्रैकजटां नाम महासर्पापराजित[1]वाग्वज्राग्रीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ ओँ शूलिनि[2] स्वाहा ॥

अथास्यां भाषित[3]मात्रायां नागकन्या महर्धिकाः ।
दह्यमाना विवस्त्राङ्गा[4] बुद्धबोधिमनुस्मरन् ॥
अनया मन्त्रविद्यया सर्वे आकृष्यन्ति पन्नगाः ।
नागकन्यां विशालाक्षीं समाकृष्योपभुंजयेत्[5] ॥

अथ भगवान् गगन[6]समयसम्भववज्रं[7] नाम समाधिं समापद्येमां महाधर्मसमयवज्रभृकुटीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

ओँ भयनाशनि त्रासनि[8] त्रासय[9] भृकुटी तटि वेतटि वेतटि[10] वैरटि वैरटि श्वेते[11] श्वेतजटिनि स्वाहा ॥

अथास्यां गोतमात्रायां सर्वविद्याधरात्मजाः ।
कम्पिता भयमापेदे ज्ञानराजमनुस्मरन् ॥
विद्याधरमहाकन्यां चलत्कनककुण्डलाम् ।
आकृष्य समयाद्येन अनया मन्त्रविद्यया ॥
निरोधवज्रराजेन[12] निष्पन्नेनाग्रचारुणा[13] ।
त्रिवज्रज्ञानसंभूताः क्षणात् कृषान्ति सर्वतः ॥
अथवा[14] सर्वक्रोधानां लक्षजापेन मन्त्रिणः ।
सर्वकर्मकराः प्रोक्ताः विजनेषु महत्सु च ॥

1. BC °समयराज°। 2. A adds हूँ। 3. BC विनिःसृत°। 4. A °त्मा°। 5. B °जते। 6. C नगर°। 7. A omits °वज्रं। 8. A adds त्रासे। 9. Twice in A. 10. A omits. 11. B omits. 12. A °जापेन। 13 A °रणा°॥ 14. अथ भगवान्।

आचार्यनिन्दनपरा महायानाग्रनिन्दकाः।
मारणीयाः प्रयत्नेन अथवा स्थानचालनम्[1]।
अनेन बोधिं परमां मन्त्रसिद्धिञ्च प्राप्नुयात्॥

इत्याह च॥

दशदिक्सर्वबुद्धानां कायवाक्चित्तघातनम्।
भावनीयं विधानेन[2] रिपूणां दुष्टचेतसाम्॥
रुधिरार्द्रं सलिलार्द्रं विण्मूत्रार्द्रं वापि कारयेत्।
प्रा[3]वृत्य लिङ्गं चाक्रम्य क्रोधराजं प्रयोजयेत्।
शताष्टेन तु[4] पूर्णेन ध्रुवं बुद्धोऽपि शीर्य्यते॥

इत्याह च॥

सलिलार्द्रगतं वस्त्रं कृत्वा क्रोधाग्रबन्धनात्।
लिङ्गं [5]पादेन चाक्रम्य ध्रुवं बुद्धोऽपि नश्यति॥
विण्मूत्रार्द्रगतं वस्त्रं पूतिगन्धजुगुप्सितम्।
प्रावृत्य मन्त्रमावर्त्तेत्[6] शुष्यते म्रियते क्षणात्॥
भस्मोदकार्द्रगतं वस्त्रं प्रावृत्य क्रोधसङ्कुलम्।
शताष्टवारानुच्चार्य वज्रसत्त्वोऽपि शीर्य्यते॥

इत्याह च॥

सलिलार्द्रगतं वस्त्रं प्रावृत्य क्रुद्ध[7]चेतसा[8]।
नग्नो मुक्तशिखो भूत्वा विकटोत्कटसम्भ्रमः॥
लिङ्गपादेन चाक्रम्य खधातुमपि नाशयेत्।

इत्याह च॥

1. B °चारिणम्। 2. C विचारेण। 3. A परा°। 4. A °ष्टपरि°।
5. A वाम°। 6. B °माधत्ते। 7. C क्रूर°। 8. AC °सः।

मातृगृहे श्मशाने[1] शून्यवेश्मनि चतुष्पथे ।
एकलिङ्गेकवृक्षे वा अभिचारं समारभेत् ॥
मानुषास्थिमयं कीलं अष्टाङ्गुलप्रमाणतः ।
शताष्टवारानुच्चार्य[2] अरिद्वारेषु गोपयेत् ॥
बुद्धास्त्रिकायवरदो ज्ञानाज्ञानविवर्जितः ।
पक्षाभ्यन्तरपूर्णेन भ्रश्यते[3] म्रियतेऽपि वा ॥
कपालं परिपूर्णं वा प्राप्य विघ्नो[4] विशेषतः ।
लिखेन्मन्त्रपदं तत्र जापया[5] वज्रभाषया ॥
अरिद्वारेऽथवा ग्रामे गोप्योच्चाटयते[6] ध्रुवम् ।
तालपत्रेऽथवान्यत्र क्रोधमन्त्रं समालिखेत् ।
अरिगृहे[7]ऽथवा द्वारे गोप्य नश्यति[8] शुष्यति ॥

इत्याह भगवान् महासमयके[9]तुवज्रः ।

अथ भगवान् सर्वतथागतकायवाक्चित्तनिबन्धनवज्रं नाम समाधिं समापद्येदं सर्वत्रैधातुककायवाक्चित्तकीलन-वज्रं[10] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

॥ ओँ घ घ घातय[11] घातय सर्वदुष्टान् फट् कीलय कीलय सर्वपापान् फट् हूँ हूँ हूँ वज्र कीलय वज्रधर आज्ञापयति कायवाक्चित्तवज्रं कीलय हूँ फट् ॥

अथास्मिन् भाषितमात्रे सर्वे वज्रा महर्धिकाः ।
मूर्च्छिता भयमापन्ना स्ववज्रचित्तमनुस्मरन् ॥

1. A adds वा । 2. °नभिमन्त्र्य । 3. C भ्रस्यते । 4. BC विधिज्ञो । 5. A जपन्वा । 6. A °टनं, C टयेत् । 7. C °द्वारे । 8. B तस्य वि°; C °ते तस्य वि° । 9. C हे° । 10. A मन्त्रनाम । 11. Once in B.

मानुषास्थिमयं कीलं अथवा खदिराग्रजम्[1] ।
अयोमयकृतं कीलं त्रिवज्रकायनाशनम् ॥
वज्रसत्त्वं समाधाय स्फुलिङ्गाकुलसुप्रभम् ।
त्रिवज्रकायपर्यन्तं बिम्बं ध्यात्वा प्रयोजयेत् ॥
वैरोचनमहामुद्रां अथवा रागवज्रिणः ।
यमान्तक[2]महामुद्रां ध्यात्वा त्रिवज्रकीलनम्[3] ॥
कुण्डलामृतवज्रेण[4] दुष्टक्रूरनिकृन्तनम् ।
कर्तव्यं वज्रयोगेन बुद्धस्यापि महात्मनः ॥
हृदयं यावत् पादान्तं वज्रकीलविभावनम् ।
ऊर्द्ध्वन्तदेव समयमि[5]दं कीलविजृम्भितम् ॥
ध्यानवज्रप्रयोगेण ध्रुवं बुद्धोऽपि कील्यते ।
वज्रसत्त्वो महाराजा कीलयन् म्रियते लघु ॥

अथ भगवान् महावैरोचनः कायविजृम्भितवज्रं नाम समाधिं समापद्येदं स्वकायसमयाक्षेपवज्रकीलनमन्त्रं[6] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ छिन्द छिन्द भिन्द[7] भिन्द हन हन दह दह दीप्तवज्रचक्र हुँ[8] फट् ॥

अन्योन्यवेष्टनाकारमङ्गुष्ठपदमीलनम् ।
वैरोचनपदाक्रान्तं वज्रकीलनिपातनम् ॥
हतमात्रे महासत्त्वे त्रिकायवज्रसम्भवः ।
उत्तिष्ठेत् समया[9]ग्रेण न चेन्नाशपदं भजेत्[10] ॥

1. C रागवज्रिणः । C omits a long portion of 4 lines from here. 2. C महान्तक° । 3. C °क° । 4. C कीलेन । 5. A °येन इ° । 6. BC omit °मन्त्रं । 7. AC omit. 8. A हूँ । 9. A °यो° । 10. C °वेत्° ।

अथ भगवान् लोकेश्वरो वाग्विजृम्भितं[1] नाम समाधिं समापद्येदं वाक्समयाक्षेपकीलनमन्त्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ ह्रीः भूर्भुवः ॥

विकसितज्ञान[2]पद्मे वज्राङ्कु[3]लिनिवेशनम् ॥

वाक्य[4]वज्रपदाक्रान्तं वज्रकीलनिपातनम् ।

हतमात्रे महावज्रे त्रिकायालयसम्भवः ।

उत्तिष्ठेत् हतमात्रेण नचेन्नाशपदं भजेत् ॥

अथ भगवान् महावज्रधरः चित्तविजृम्भितवज्रं नाम समाधिं समापद्येदं चित्तसमयाक्षेपकी[5]लनमन्त्रं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ।

॥ ओँ वज्रराज हूँ ॥

पञ्चशूलनिवेशेन[6] स्फुलिङ्गाकुलसाधनम्[7] ।

चित्तवज्रपदाक्रान्तं वज्रकीलनिपातनम् ॥

हतमात्रे महावज्रे त्रिवज्रालय[8]सम्भवः ।

उत्तिष्ठेत् हतमात्रेण न चेन्नाशपदं भजेत् ॥

सम्यग्विधान[9]मार्गेण कायवाक्चित्तयोगतः ।

खधातुवज्रपर्यन्तं कीलयेन्नात्र संशयः ॥

इत्याह भगवान् महाकीलवज्रः ।

अथ बुद्धास्त्रिकायाग्राः सत्त्वधातुहितैषिणः ।

तुष्टाः प्रामोद्यसंप्राप्ताः इदं घोषमकारयन् ॥

1. A °तवज्रं । 2. A omits ज्ञान° । 3. C °ञ्ज° । 4. ABC राग° । 5. C परिकी° । 6. AC निबन्धेन । 7. AC °भावनं । 8. A °मल° । 9. BC °चार° ।

अहो गुह्यपदं श्रेष्ठमहो[1] सारसमुच्चयम् ।
अहो धर्मपदं शान्तं अहो वज्रविदारणम् ॥
कीलनं सर्वबुद्धानां बोधिसत्त्वा महायशाः ।
कायवाक्चित्तवज्राणां कीलनं समुदाहृतम् ॥
इदं तत् सर्वमन्त्राणां कीलनं तत्त्व[2]सम्भवम् ।
कायवाक्चित्तवरदं मन्त्रतत्त्वसमुच्चयम् ॥ इति ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे कायवाक्चित्ताद्भुतमन्त्राकर्षणविजृम्भितराजो नाम समाधिपटलश्चतुर्दशोऽध्यायः ॥

1. B महा° ।   2. C सत्त्व° ।

पञ्चदशः पटलः ।

अथ वज्रधरो राजा सर्वाकाश[1]महाचरः ।
सर्वाभिषेकसर्वज्ञो वाग्वज्रं समुदीरयत्[2] ॥
द्वादशाब्दिकां कन्यां तां[3] चण्डालस्य महात्मनः ।
साधयेत् साधको नित्यं विजनेषु विशेषतः ॥
विण्मूत्रसमयाद्येन चतुरस्रं विधानतः ।
मण्डलं कारयेत् तत्र वज्रमण्डलसाधनैः[4] ॥
सर्वलक्षणसंशुद्धां चारुवक्त्रां सुशोभनाम् ।
सर्वालङ्कारसम्पूर्णामङ्के स्थाप्य विभावयेत् ॥
पञ्चमण्डलचक्रेण बुद्धबिम्बविभावनम्[5] ।
भावयेत् पूजापदं रम्यं रहस्यं मन्त्रवज्रि[6]णाम् ॥
वैरोचनमहाबिम्बं कायवाक्चित्तवज्रिणाम् ।
ध्यानमन्त्रप्रयोगेण भवेद्बुद्धसमप्रभः ॥
नीलोत्पलदलाकारां रजकस्य महात्मनः ।
कन्यां तु साधयेन्नित्यं वज्रसत्त्वप्रयोगतः ॥
तदेव विधिसंयोगं कृत्वा कर्म समारभेत् ।
एषो हि सर्वमन्त्राणां समयो दुरतिक्रमः ॥
स भवेत् तत्क्षणादेव वज्रसत्त्वसमप्रभः ।
सर्वधर्मधरो[7] राजा काममोक्षप्रसाधकः ॥
चारुवक्त्रां विशालाक्षीं नटकन्यां सुशोभनाम् ।
साधयेत् साधको नित्यं वज्रधर्मविभावनैः ॥

1. A °शो । 2. A °रयन् । 3. A omits. 4. A वज्रकुलविभावनैः । 5. C °ना । 6. °चक्रि° । 7. BC °समो ।

स भवेत् वज्रधर्मात्मा दशभूमिप्रतिष्ठितः।
वाक्समयधरो राजा सर्वाग्रः परमेश्वरः॥
ब्रह्मक्षत्रियवैश्यानां कन्यां शूद्रकुलोद्भवाम्।
साधयेत् वज्रधर्मात्मा इदं गुह्यसमावहम्॥
अस्तमिते तु वज्रार्के साधनं तु समारभेत्।
अरुणोद्गमवेलायां सिध्यते भावनोत्तमैः॥
सर्वालङ्कारसंपूर्णां गन्धपुष्पविभूषिताम्।
ध्यात्वा तु वज्रसत्त्वाग्र्यां[1] लघु सिद्धिमवाप्नुयात्॥
स भवेत् त्रिकायवरदो बुद्धलक्षणलक्षितः।
योजनशतविस्तारमवभासं करोत्यसौ॥
इये[2]न्द्रियप्रयोगेण सर्वयोगान् समारभेत्।
एषो हि सर्वसिद्धी[3]नां समयो दुरतिक्रमः॥
विण्मूत्रसमयं भक्षेत् यदीच्छेत् सिद्धिवज्रिणः।
एषो हि सर्वसिद्धीनां समयो दुरतिक्रमः॥
विण्मूत्रसमयाद्येन इयेन्द्रियप्रयोगतः।
सिद्धतेऽनुत्तरं तत्त्वं बुद्धबोधिपदं शिवम्॥

इत्याह भगवान् काममोक्षसमयवज्रः।

अथ भगवान् महासमयवज्रक्रोधं नाम समाधिं समापद्येदं सर्वतथागतवज्रसन्त्रासनक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास॥

॥ ओँ ह्रीः ष्ट्रीः विकृतानन सर्वशत्रून्नाशय स्तम्भय हूँ[4] हूँ फट् फट् स्वाहा॥

1. A ° ग्री, C ° ग्रो। 2. A ह्वे °। 3. A ° द्धा °। 4. Thrice in B.

विषरुधिरसंयुक्तं लवणं राजिकान्तथा ।
कण्टकाग्नौ जुहेत् क्रुद्धः कन्यानामपदैः सह ॥
मध्याह्ने अर्धरात्रे वा द्रुतं शस्यति सर्वथा ।
त्रिकोणे तु जुहेत् प्राज्ञोऽष्ट[1]सहस्रं विधानतः ॥
दिनत्रयमिदं कार्यं कन्यानां फलहेतुतः[2] ।
स्तंभनं भवते तेन त्रिकल्पासंख्यमपि सदा ॥
बुद्धो धर्म[3]धरो वापि वज्रसत्त्वोऽपि वा यदि ।
अतिक्रमेद्यदि मोहात्मा तदन्तं तस्य जीवितम् ॥
चतुर्दश्यां तथाष्टम्यां गृह्याङ्गारं श्मशानतः ।
अभिमन्त्र्य विधानेन दासकः स भवेत् सदा ॥
रेखां ददाति ध्यात्वा तु मन्त्रज्ञो यस्य कस्यचित् ।
शत्रोः प्रतिकृतिं कृत्वा म्रियते नात्र संशयः ॥
मुद्गरं ध्यानयोगेन पातयन् पतितं[4] भुवम् ।
हूँकारं ज्वालसंयुक्तं दीप्तवज्रं प्रभावयेत् ॥
नाशकः सर्वदुष्टानां वज्रपाणिकुलः स्मृतः ।
खटिकाङ्गारादिभिर्लेख्य पुरुषं वाऽथवा स्त्रियम् ।
कुठारं पाणौ विभावित्वा ग्रीवां छिन्नां विभावयेत् ।
बुद्धास्त्रिवज्ररत्नाग्राः सर्वसत्त्वहितैषिणः ॥
अनेन हन्यते वापि म्रियते नात्र संशयः ।
कर्मवज्रमहादीप्तं स्फुलिङ्गगहनाकुलम् ।
मध्ये वज्रं विभावित्वा वारिस्तम्भनमुत्तमम् ॥
मण्डले लिख्यमाने[5] तु वाताद्यं यदि जायते ।

1. A ° थ । 2. A ° ना । 3. A रज ° । 4. A omits. 5. A ° त्रे ।

दंष्ट्रामुद्रां ततो बद्ध्वा दुष्टसत्त्व[1]मनुस्मरेत्।
बुद्धैश्च बोधिसत्त्वैश्च निर्मितं वापि यद्भवेत्॥
शीर्यते दृष्टमात्रेण न चेन्नाशं समाप्नुयात्।
बुद्धाश्च बोधिसत्त्वाश्च ये चान्ये दुष्टजन्तवः।
त्रासितास्तेन मन्त्रेण म्रियन्ते नात्र संशयः॥

तत्रेदं सर्वतथागतमन्त्ररहस्यहृदयम्[2]।

ज्ञानसत्त्वप्रयोगेन मध्ये बिम्बं प्रभावयेत्।
चतुःस्थानेषु मन्त्रज्ञो योषितं स्थापयेत्सदा॥
सर्वालङ्कारसम्पूर्णां[3] सर्वलक्षणलक्षिताम्।
पद्मं प्रसारितं कृत्वा इदं मन्त्रं विभावयेत्॥

॥ हूँ ॥

पञ्चरश्मिप्रभं दीप्तं भावयेत् योगवज्रिणम्[4]।
कायवाक्चित्तवज्रेषु पातयन् बोधिमाप्नुयात्॥
स भवेत् तत्क्षणादेव वैरोचनसमप्रभः[5]।
वज्रसत्त्वो महाराजः संबुद्ध[6]कायवज्रधृक्॥

सर्व[7]सत्त्वोत्पादनकरो[8] नाम समाधिः।

योषितं प्राप्य विधिना चारुवक्त्रां हितैषिणीम्।
प्रच्छन्ने प्रारभेत् पूजां गुह्या[9]गुह्यं विभक्षयेत्॥
स भवेत् तत्क्षणादेव मञ्जुश्रीतुल्यतेजसः[10]।
अन्तर्द्धानाधिपः श्रीमान् जाम्बूनदसमप्रभः॥

1. C शत्रु °। 2. A adds फट्। 3. B संयुक्तां। 4. A वज्रयोगिनः। 5. A मञ्जुश्रीतुल्यतेजसा। 6. बुद्धस्त्रि °। 7. A वज्र °। 8. AC ° वज्रो। 9. C ° ह्यं। 10. C ° सा।

भक्ष्यं वा अथवा विष्ठं मांसं वापि प्रवेशयेत् ।
[1]अभिमन्त्र्य विधानेन भक्ष्यं बुद्धैर्न दृश्यते ॥

इत्याह च ।

विष्ठं संगृह्य विधिना[2] शरावसम्पुटे न्यसेत् ।
शताष्टरावान् सञ्चोद्य बुद्धसूर्य्यैर्न दृश्यते ॥
श्वानमांसं हयमांसं महामांसं विधानतः ।
गृह्य सम्पुटयोगेन भक्षयंस्तैर्न दृश्यते ॥
विष्ठेन[3] सह संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
[4]महामांसेन संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
श्वानमांसेन संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
गोमांसेन च संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
प्राणकैर्विष्ठसंभूतैर्गुलिकां कारयेत् व्रती ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
कर्पूरचन्दनैर्युक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥
रोचनागुरुसंयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
हयेन्द्रियप्रयोगेन भवेद्वज्रमहाबलः[5] ॥

1. A omits six lines from here. 2. C विष्ठां गृह्य विधानेन । 3. B विश्लेन । 4. B omits four lines from here. 5. C सर्वबुद्धैर्न दृश्यते ।

कर्पूरकुङ्कुमैर्युक्तां गुलिकां त्रिलोहवेष्टिताम् ।
इयेन्द्रियप्रयोगेन सर्वबुद्धैर्न दृश्यते ॥

इत्याह च ।

अधिष्ठाय महामुद्रां यस्य कस्यापि[1] वज्रिणः ।
स भवेत् तादृशः श्रीमान् महाबलपराक्रमः ॥
योजनकोटि[2]संपूर्णमूर्द्ध्वं वज्रगतिर्भवेत् ।
त्रिसाहस्रगतिः श्रीमान् भवेत् बुद्धसमप्रभः ॥
कामधातुस्थितां कन्यां सुरभोगां कुलव्रताम्[3] ।
रूपधातुस्थिताश्चापि कामयेत[4] महाबलः ॥

इत्याह भगवान् समयान्तर्द्धानमहावज्रः ।

अथ बुद्धाः प्रहृष्टात्माऽभ्रान्तचित्ता मनीषिणः ।
विस्मयोत्फुल्लनयना इदं घोषमुदीरयन् ॥
अहो सुविस्मयमिदं [5]अहो गुह्यमहाद्भुतम् ।
अहो स्वभावसंशुद्धमहो धर्मं सुनिर्मलम् ॥ इति ॥
अथ वज्रधरः शास्ता स्रष्टा कर्त्ता महाद्भुतः ।
शुद्धवज्रो महाधर्मो वज्रघोषमकारयत् ॥
सर्व[6]वज्रप्रयोगेन तोषणं बुद्धवज्रिणाम् ।
बुद्धबोधिप्रभेदेन तोषणं वज्रचारिणाम् ॥
वज्रलोचन[7]बिम्बाद्यैः उष्णीषाराधनं स्मृतम् ।
क्रोधानामपि तच्छ्रेष्ठं बुद्धवज्रप्रभावनम् ॥
विद्याराजाग्रधर्माणां रत्नकेतुविभावनम् ।
विद्याराज्ञीप्रयोगेषु अमितायुर्विभावनम् ॥

1. A कस्यचित् । 2. B °शत° । 3. A °पुत्राम् । 4. A °यति ।
5. A omits three lines from here. 6. A सत्त्व° । 7. B. वज्रात्माचर° ।

सर्वकर्मिकमन्त्राणां अमोघज्ञानभावनम् ।
सर्वेषामेव मन्त्राणां वज्रसत्त्वविभावनम् ॥

इत्याह च ।

यक्षिणीमन्त्रतन्त्राणां यमान्तकस्य कल्पनम् ।
सर्वेषां योगमन्त्राणां सस्तम्भं वि[1]प्रचोदनम् ॥

इत्याह च भगवान् महासमयवज्रः[2] ।

अनेन ध्यानवज्रेण मन्त्राराधनमण्डलम् ।
साधकानां हितं प्रोक्तं महासमयसाधनम् ॥
अथ वज्रधरः शास्ता सर्वधर्मेश्वरः प्रभुः ।
कायवाक्चित्तसंशुद्धो ज्ञानवज्रमुदीरयत् ॥
पर्वताग्रेषु रम्येषु विजनेषु वनेषु च ।
ध्यानवज्रं प्रकुर्वीत जपमन्त्रप्रयोगतः ॥
वज्रसत्त्वादयः सर्वे मन्त्रध्यानप्रचोदिताः ।
कुर्वन्ति चित्रकर्माणि वाक्यवज्र[3]वचो यथा ॥
वज्रधर्ममहाबिम्बं पद्मरागसमप्रभम् ।
कायवाक्चित्तमहावज्रं[4] तत्[5]स्थाने कुलकल्पनम् ॥
आवेशनविधिं सर्वं कारयन् सिध्यति ध्रुवम् ।
स्तोभ[6]स्तम्भं महाबिम्बं[7] आर्यभौमं चतुर्थकम् ॥
कर्त्तव्यं सिद्धिवज्रेण एवं सिध्यति शाश्वतम् ।
द्वादशवार्षिकां[8] कन्यां पुरुषं द्वादशाब्दिकम् ॥

1. A शस्त्रं मूर्ध्नि । 2. BC omit ° वज्र । 3. A वाक्कर्म ° । 4. A ° वज्रेषु । 5. A त्रि ° । 6. A ° स्तोत्रं । 7. AB ° दिव्यं । 8. AC ° शाब्दिकां ।

सर्वलक्षणसंपूर्णं गृह्यावेशं[1] प्रकल्पयेत् ॥
विधानानि तु सर्वाणि कृत्वा कर्मप्रसाधनम् ।
अन्यथा हास्यमाप्नोति त्रैधातुकेषु जन्तुषु ॥
तत्रेमानि हृदयमन्त्राक्षरपदानि ।










खधातुमपि निश्चेष्टं सर्वकल्पविवर्जितम् ।
आवेशयति विधिना वज्रसत्त्वमपि स्वयम् ॥
हूँकारे वज्रसत्त्वात्मा हःकारे कायवज्रिणः ।
आःकारे धर्मधरो राजा इदं गुह्यपदं दृढम् ॥
एःकारं क्षोभनं प्रोक्तं भ्रमनं कम्पनं स्मृतम् ।
एषो हि सर्वक्षोभा[2]नां रहस्योऽयं प्रगीयते ॥
इत्याह च ॥
हस्तमात्रं द्विहस्तं वा यावद्धस्ताष्टपञ्चकम् ।
उत्तिष्ठन्ति भयत्रस्ता वज्रराजप्रचोदिताः ।
तथैव सर्वं यथापूर्वमिदं गुह्यसमावहम् ॥ इति ॥
अथ वज्रधरो राजा सर्वतथागताधिपः ।
त्रिकायपदसंघोष[3]मिदं घोषमुदीरयत् ॥
अनेकाग्रगतेनापि इदं कार्यं दृढव्रतैः ।
कर्तव्यं वा[4]न्ययोगेन सर्वदुष्टविदारणम् ॥
शत्रोः प्रतिकृतिं कृत्वा चिताङ्गारतुषादिभिः ।
नग्नो मुक्तशिखो भूत्वा त्रैलोक्यमपि नाशयेत् ॥

1. BC °ह्याथ सं° । 2. A °चा° । 3. A °शुद्ध° । 4. A ना° ।

शत्रोः प्रतिकृतिं कृत्वा [1]श्मशानचितिभस्मना ।
सहस्राष्टशतेनापि म्रियते नात्र संशयः ॥
गोमांसहयमांसेन श्वानमांसेन चित्रिणा ।
त्रिकोणमण्डले कार्या ध्रुवं वज्रोऽपि नश्यति ॥
महामांसेन सर्वेषां नाशनं वज्रजं स्मृतम् ।
एषो हि सर्वक्रूराणां ना[2]शको दारुणः स्मृतः ॥
शत्रोः प्रतिकृतिं कृत्वा विण्मूत्रेणाग्रधर्मिणा ।
कण्टकाग्नौ जुहेत् क्रुद्धो ध्रुवं बुद्धोऽपि नश्यति ॥

इत्याह च ।

शत्रोः प्रतिकृतिं कृत्वा नदीस्रोतोगयोरपि ।
तिलमात्रमपि सर्वाङ्गं कण्टकैर्विषसम्भवैः ॥
पूरयेच्चोदनपदे[3]ध्रुवं बुद्धोऽपि नश्यति ।

इत्याह च ।

राजिका लवणं तैलं विषं धत्तूरकं[4] तथा ॥
मारणं सर्वबुद्धानां इदं श्रेष्ठतमं स्मृतम् ।
अङ्गाराद्र्गतं वस्त्रं प्रावृत्य क्रोधचेतसा ॥
लिङ्गं पादेन चाक्रम्य राक्षसैर्गृह्यते ध्रुवम् ।
प्रतिकृतिमस्थिचूर्णेन विषेण रुधिरेण च ॥
कृत्वा तु गृह्यते शीघ्रं वज्रसत्त्वोऽपि दारुणः ।
लिङ्गराजिकसंयुक्तं विण्मूत्रेणापि पूरितम् ॥
पादाक्रान्तगतं कृत्वा महामेघेन[5] गृह्यते ।

इत्याह च ।

1. A omits six lines from here. 2. C त्रा°। 3. A °दे°। 4. A धूर्त्तरकं। 5. ° दाहेन।

तत्रेदं सर्वतथागतवज्रमहाक्रोधसमयहृदयम्।

॥ नमः समन्तकायवाक्चित्तवज्राणाम्। ओँ हुलु हुलु तिष्ठ तिष्ठ बन्ध बन्ध हन हन दह दह गर्ज गर्ज विस्फोटय विस्फोटय सर्वविघ्नविनायकान्महागणपतिजीवितान्तकराय हूँ फट्॥

होमं वाऽप्यथवा ध्यानं कायवाक्चित्तभेदनम्[1]।
कर्तव्यं नान्यचित्तेन इदं मारणमुत्तमम्॥
वज्रसत्त्वं महाक्रूरं विकटोत्कटभीषणम्।
कुठारमुद्गरहस्तं ध्यात्वा ध्यानं प्रकल्पयेत्॥

॥ तत्रेदं महाक्रूरक्रोधसमयम्॥

खधातु परिपूर्णं तु सर्वबुद्धैः प्रभावयेत्।
घातितं तेन दु[2]ष्टेन ध्यात्वा म्रियेत तत्क्षणात्॥
बुद्धैश्च बोधिसत्त्वैश्च परिपूर्णं विभावयेत्।
घातितं सर्वदुष्टेन[3] म्रियते वज्रधरः स्वयम्॥
चिन्तयेत्पुरतो मन्त्री रिपुं बुद्धापकारिणम्।
भीतं भयाकुलं चिन्तेत् म्रियते नात्र संशयः॥
राक्षसैर्विविधैः क्रूरैः प्रचण्डैः क्रोधदारुणैः।
त्रासितं भावयेत् तेन[4] म्रियते वज्रधरः स्वयम्॥
उलूकैः काकगृध्रैश्च शृगालैर्दीर्घतुण्डकैः।
भक्षितं भावयंस्तेन[5] ध्रुवं बुद्धोऽपि नश्यति॥
कृष्णसर्पं महाक्रूरं भयस्यापि भयप्रदम्।

1. A भिन्दनं। 2. A पु°। 3. A दुष्टसत्त्वेन। 4. BC तान्। 5. A °ये त्तेसु।

ध्यात्वा विषाग्रसमयं ललाटे तं[1] विशिष्यते ।
भक्षितं तेन सर्पेण ध्रुवं बुद्धोऽपि नश्यति ॥
दशदिक्सर्वसत्त्वानामोति[2]श्चोपद्रवस्य वा ।
[3]निपातनं रिपवे श्रेष्ठमिदं[4] चोदनमुत्तमम् ॥
मुद्गरेण प्रचण्डेन उरसि ताडयेत् व्रती ।
नश्यति जीवितात् शक्रः वज्रधर्मवचो यथा ॥
स्फालनं कुट्टनं चिन्तेत् कुठाराद्याद्भि वज्रिणः ।
म्रियते त्रिकायवरदो वज्रसत्त्वोऽपि दारुणः ॥
रक्षाद्यानि[5] तु मन्त्राणि देवतानि च[6] कीलयेत् ।
एषो हि मारणाग्राग्रः समयो दुरतिक्रमः ॥
स्कन्धवज्रेण यावन्तः सत्त्वास्तिष्ठन्ति मण्डले ।
द्यो[7]तनात्मगतां चिन्तेदेवं तुष्यन्ति नान्यथा ॥
बुद्धो वज्रधरः शास्ता वज्रधर्मोऽपि चक्रिणः[8] ।
म्रियते व्याड[9]योगेन चित्तवज्रवचो[10] यथा ॥

इत्याह भगवान् महाक्रूर[11]समयवज्रक्रोधः ।

अथ वज्रधरो राजा सर्वाकाशो[12] महामुनिः ॥
सर्वाभिषिक्तसंबुद्धो ज्ञानवज्रमुदीरयत् ।
अहो स्वभावसंशुद्धं वज्रयानमनुत्तमम् ॥
अनुत्पन्नेषु धर्मेषु उत्पत्तिः कथिता जिनैः ।

तत्रेदं क्षुद्र[13]कर्मरहस्यम् ।

1. AC ° टेदं । 2. C ° मीने ° । 3. C adds भयं before. 4. C omits. 5. A ° द्यादीनि । 6. A ° तादीनि । 7. A घा ° । 8. A वा यदि । 9. AB ध्यान ° । 10. A ° धरो । 11. B omits. 12. C ° कार ° । 13. A adds वज्र before.

खटिकाङ्गारेण लिखेत् सर्प[1] विकृतं तु भयप्रदम् ।
कृष्णज्वालाकुलं क्रुद्धं द्विजिह्वं दंष्ट्रमालिनम् ॥

तत्रेदं क्रूरनागचोदनहृदयम् ।

॥ खँ ॥

वक्त्र[2]मध्यगतं चिन्तेत् विषं हालाहलप्रभम् ।

तत्रेदं सर्वविषाकर्षणहृदयम् ।

॥ क्रौः ॥

त्रैधातुकस्थितं सर्वं विषं त्रिविधसम्भवम् ।
हृतं तु भावयेत्तेन पतमानं विचिन्तयेत् ॥
स भवेत्तत्क्षणादेव विषोदधिसुदारुणः ।
स्पृष्टमात्रे जगत्सर्वं नाशयेन्नात्र संशयः ॥

इत्याह च ।

मण्डूकवृश्चिकादीनि सर्पाणि विविधानि च ।
कर्त्तव्यानि विधानेन यागोत्पत्तिक[3]लक्षणैः ॥

तत्रेदं सर्वविषमहासंक्रमणहृदयम् ।

॥ ओँ ॥

दुष्टवज्रविषादीनि ये चान्ये विषदारुणाः ।
आकृष्य[4] ज्ञानचक्रेण[5] प्रेरणं खवज्रमण्डले ॥

इत्याह भगवान्महाविषसमयवज्रः । तत्रेदं विष[6]-चिकित्सनवज्र[7]हृदयम् ॥

॥ हूँ ॥

1. B सर्वं ° ।　2. A चक्र ° ।　3. B ° पत्तिक ° ।　4. C ° ष्यन्ति ।
5. A ° वज्रेण ।　6. C adds ° समय ° ।　7, A ° त्सा नाम ।

हृदये तं महावज्रं सितवर्णं विचिन्तयेत् ।
रश्मिमेघं महादीप्तं चन्द्रांशुमिव निर्मलम्[1] ॥
चतुःस्थानप्रयोगेण संहरन् तत्र तिष्ठते[2] ।
द्वित्रिवारान् प्रभावित्वा छेदयन्तं विचिन्तयेत् ।
खधातुं विष[3]सम्पूर्णं निर्विषं कुरुते क्षणात् ॥

इत्याह च ॥

तत्रेदं सर्वविषाकर्षणहृदयम् ।

॥ आः ॥

गण्डपिटकलूताश्च[4] ये चान्ये व्याधयः स्मृताः ।
नश्य[5]न्ति ध्यानमात्रेण वज्रपाणिवचो यथा ॥
अष्टपत्रं महापद्मं शशाङ्कमिव निर्मलम् ।
तत्र मध्यगतं चिन्तेत्पञ्चरश्मिप्रपूरितम् ॥
संहरे[6]त्कृष्णसमयं चोदने[7] सितसन्निभम् ।
इदं ध्यानपदं गुह्यं रहस्यं ज्ञाननिर्मलम् ॥ इति ॥

तत्रेमानि ह्याध्यात्मिकव्याधिचिकित्सावज्रहृदयमन्त्राक्षरपदानि ।

॥ जिनजिक् । आरोलिक् । वज्रधृक् ॥

यदेवाक्षरपदमिष्टं भवेद्भक्तिगुणावहम् ॥
भावयेत् तादृशं व्याधिं विश्व[8]वज्रप्रचोदनैः ।
वानराकारसमयमथवा श्वानसम्भवम् ॥
स्वकायवाक्चित्तपदे[9] निश्चरन्त[10] विचिन्तयेत् ।
चक्रं वाऽप्यथवा वज्रं ध्यात्वा वज्रपदे स्थितः ॥

1 B शीतलम् । 2. B संहरन् तिष्ठति क्षणात् । 3. AB °मपि । 4. A °कैर्नृणां । 5. A भविष्य° । 6. B संहारकं । 7. A °नैः, C °रे । 8. AB बिम्बं । 9. A °देन । 10. A °लन्ति ।

कायवाक्चित्तसमयं चूर्णितं[1] तेन भावयेत्।
ततः प्रभृति संबुद्धा बोधिसत्त्वा महायशाः॥
अधिष्ठानपदं रम्यं ददन्ति हृष्टचक्षुषः।

इत्याह च॥

स्वकायचित्तवज्रेषु बुद्धमेघान् विचिन्तयेत्।
वज्ररागं[2]महामेघं भावयेद्वाधिमोक्षणम्॥ इति॥
दशदिक्सर्वबुद्धानां वज्रसत्त्वसुधीमताम्[3]।
क्रुद्धो[4] भावयतस्तस्य[5] मारणं पारमार्थिकम्॥
अनेन ध्यानमात्रेण[6] कर्मजं वापि यत् स्मृतम्।
शताष्टजपयोगेन सप्तदिनै[7]र्विनश्यति॥
अथवा स्वमन्त्रराजेन वज्रध्यानविधिः स्मृतः।
एषो हि सर्वव्याधीनां समयो दुरतिक्रमः॥
अथ वज्रधरो राजा ज्ञानाङ्कुशमहाद्युतिः।
काममोक्षमहावज्र इदं वचनमब्रवीत्॥
स्वप्नोपमेषु धर्मेषु अनुत्पादस्वभाविषु।
स्वभावशुद्धतत्त्वेषु भ्रान्तिवज्रः प्रगीयते॥
पश्यन्ति साधका नित्यं जपध्यानार्थतत्पराः।
बुद्धांश्च बोधिसत्त्वांश्च द्विधाभेदेन दर्शनम्॥

॥ तत्रेदं महास्वप्नसमयपदम्।

बोधि[8]ज्ञानाग्रसंप्राप्तं पश्यते ज्ञान[9]सुप्रभम्।
बुद्धसम्भोगकायं वा[10] आत्मानं लघु पश्यति॥

1. A वर्णितं। 2. A °जं। 3. A °सत्त्वा धीमताः। 4. B °द्धान्। 5. Mss. भावयेत्तस्य। 6. AB °मार्गेण। 7. AC दिनैः सप्तैः। 8. A प्रज्ञा °। 9. C बुद्ध °। 10. A कार्यं च।

त्रैधातुकमहासत्त्वैः पूज्यमानं स पश्यति ।
बुद्धैश्च बोधिसत्त्वैश्च पञ्चकामगुणैरपि[1] ।
पूजितं पश्यते बिम्बं[2] महाज्ञानसमप्रभम् ॥
वज्रसत्त्वं महाबिम्बं वज्रधर्मं महाशय[3]म् ।
स्वबिम्बं पश्यते स्वप्ने गुह्यवज्रमहायशाः ॥
प्रणमन्ति महाबुद्धा बोधिसत्त्वाश्च वज्रिणः[4] ।
दृश्यते ईदृशं स्वप्नं कायवाक्चित्तसिद्धिदम् ॥
सर्वालङ्कारसंपूर्णां सुरकन्यां मनोरमाम् ।
दारकं दारिकां पश्यन् स सिद्धिमधिगच्छति ॥
दशदिक्सर्वबुद्धानां चैत्यस्थं पश्यति ध्रुवम् ।
ददन्ति हृष्टचित्तात्मा धर्मगञ्जं[5] मनोरमम् ॥
धर्मचक्रगतं कायं सर्वबुद्धैः परिवृतम् ।
पश्यते योगसमये ध्यानवज्रप्रतिष्ठितः ॥
आरामोद्यानविविधान् सुरकन्याद्यलङ्कृतान् ।
पश्यति ध्यानसमये सर्वबुद्धैरधिष्ठितान् ॥
बुद्धैश्च बोधिसत्त्वैश्च अभिषिक्तं[6] स पश्यति ।
विद्याधरमहाराजैः पूज्यमानं स पश्यति ॥

इत्याह च ॥

विविधान् वज्रसंभूतान् स्वप्नान् पश्यति निर्मलान् ।
सिध्यतेऽनुत्तरं तस्य कायवाक्चित्तवज्रजम् ॥
चण्डालश्वानयोगादीन् पश्यति यदि वज्रधीः[7] ।
सिध्यते चित्तनिलयं वज्रसत्त्वस्य[8] धी[9]मतः ॥

1. AC ध्रुवम । 2. C विश्वं । 3. A ° यश ° । 4. A चक्रि ° । 5. B ° राज ° । 6. A ° षेकं । 7. A ° धृक् । 8. AC ° सत्त्वोऽस्य । 9. A वा ° ।

तत्रेदं स्वप्नविचारणसमयहृदयम्।

स्वचित्तं चित्तनिध्यप्तौ सर्वधर्माः प्रतिष्ठिताः।

खवज्रस्था ह्यमी धर्मा न धर्मा न च धर्मता॥

अथ भगवन्तः सर्वतथागता आश्चर्यप्राप्ता अद्भुतप्राप्ताः[1] सर्वतथागतकायवाक्चित्त[2]संशयच्छेत्तारं वज्रसत्त्वं पप्रच्छुः। किमिदं भगवन्—

निःस्वभावेषु[3] धर्मेषु धर्मतत्त्वं उदाहृतम्।

अहो विस्मयमद्भुतं आकाशाकाशभावनम्॥ इति॥

अथ भगवान् कायवाक्चित्तवज्रपाणिस्तथागतः सर्वतथागतानेवमाह। भगवन्तः सर्वतथागता आकाशं न केनचिद्धर्मेण संयुक्तं नाप्यसंयुक्तम्[4] न चाकाशस्यैवं भवति। सर्व[5]गतोऽयं सर्वत्रानुदर्शी च। एवमेव भगवन्तः सर्वतथागताः सर्वधर्माः[6] स्वप्नाः स्वप्नसमयसंभूताश्चानुगन्तव्याः। तद्यथापि नाम भगवन्तः सर्वतथागता आकाशं अनिरूप्यं अनिदर्शनं अप्रतिपाद्यम्[7]। एवमेव भगवन्तः सर्वतथागताः सर्वधर्मा अनुगन्तव्याः।

तद्यथापि नाम भगवन्तः सर्वतथागताः [8]सर्वधर्मकायवाक्चित्तवज्रपदसमयं सर्वत्रानुगतं एकस्वभावं यदुत चित्तस्वभावम्। यश्च कायवाक्चित्तधातुराकाशधातुश्चाद्वयमेतदद्वैधीकारम्।

1. A omits. 2. A adds °समय°। 3. A omits. 4. A omits. 5. A तथाग°। 6. B omits. 7. A omits; C अप्रतिघं। 8. C omits from here to सर्वतथागताः below.

तद्यथापि नाम भगवन्तः सर्वतथागता आकाशधातुस्थिता सर्वधर्माः[1], स चाकाशधातुर्न कामधातुस्थितो न रूपधातुस्थितो नारूपधातुस्थितः[2]। यश्च धर्मधातु[3]स्त्रैधातुके न स्थितः तस्योत्पादो नास्ति, यस्योत्पादो नास्ति नासौ केनचित् धर्मेण संभाव्यते। तस्मात्तर्हि भगवन्तः सर्वतथागता निःस्वभावाः सर्वधर्मा इति।

तद्यथापि नाम भगवन्तः सर्वतथागता बोधिचित्तं सर्वतथागतज्ञानोत्पादनवज्रपदकरम्। तच्च बोधिचित्तं न कायस्थितं न वाक्स्थितं न चित्तस्थितम्। यश्च धर्मस्त्रैधातुके न स्थितः तस्योत्पादो नास्ति। इदं सर्वतथागतज्ञानोत्पादनवज्रपदम्।

न च भगवन्तः सर्वतथागताः स्वप्नस्यैवं भवति अहं त्रैधातुके स्वप्नपदं दर्शयेयम्। न च पुरुषस्यैवं भवति अहं स्वप्नं पश्येयमिति। सा च त्रैधातुकक्रिया स्वप्नोपमा स्वप्नसदृशी स्वप्नसम्भूता। एवमेव भगवन्तः सर्वतथागता यावन्तो दशदिक्सर्वलोकधातुषु बुद्धाश्च बोधिसत्त्वाश्च यावन्तः सर्वसत्त्वाः सर्वे ते स्वप्ननैरात्म्यपदेनानुगन्तव्याः।

तद्यथापि नाम भगवन्तः सर्वतथागताः चिन्तामणिरत्नं सर्वरत्नप्रधानं सर्वगुणोपेतम्। ये च सत्त्वाः प्रार्थयन्ति सुवर्णं वा रत्नं वा रौप्यं वा तत् सर्वं चिन्ता[4]मात्रेणैव[5] संपादयति। तच्च रत्नाद्यं न चित्तस्थितं न चिन्तामणिस्थितम्। एवमेव भगवन्तः सर्वतथागताः सर्वधर्मा[6] अनुगन्तव्याः।

1. BC °सत्त्वाः। 2. C omits. 3. A omits °धातु°। 4. AB चिन्तित°। 5. B °वं। 6. BC add बुद्धधर्मा।

अथ[1] भगवन्तः सर्वतथागताः प्रहर्षोत्फुल्ललोचनाः सर्व-तथागतकायवाक्चित्तवज्रं तथागतमेवमाहुः । आश्चर्यं भगवन् यत्र हि नाम आकाशधातु[2]समवसरेषु[3] सर्वधर्मेषु[4] बुद्धधर्माः समवसरणं गच्छन्ति ।

अथ ते सर्वबुद्धबोधिसत्त्वा भगवन्तो वज्रपाणेस्तथागतस्य पादयोः प्रणिपत्यैवमाहुः। यत् भगवता सर्वमन्त्रवज्र[5]सिद्धिसमुच्चयं भाषितं तानि च सर्वमन्त्रवज्रसमुच्चयसिद्धीनि कुत्र स्थितानि[6] ।

अथ वज्रपाणिस्तेषां तथागतानां बोधिसत्त्वानां च साधु-कारं दत्वा तान् सर्वतथागतानेवमाह । न च भगवन्तः सर्वतथागताः सर्वमन्त्रसिद्धीनि सर्वमन्त्रकायवाक्चित्तवज्र-स्थितानि । तत्कस्य हेतोः[7] । परमार्थतः कायवाक्चित्त-मन्त्रसिद्धीनामसंभवात् । किन्तु भगवन्तः सर्वतथागताः सर्वमन्त्रसिद्धीनि सर्वबुद्धधर्माणि स्वकायवाक्चित्तवज्र-स्थितानि । तच्च कायवाक्चित्तं[8] न कामधातुस्थितं न रूप[9]धातुस्थितं नारूप[10]धातुस्थितम् । न चित्तं काय-स्थितं न कायश्चित्तस्थितः न वाक् चित्तस्थिता न चित्तं वाक्स्थितम्। तत् कस्य हेतोः ? आकाशवत् स्वभावशुद्धत्वात् ।

अथ ते सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रं तथा-गतमेवमाहुः । सर्वतथागतधर्मा भगवन् कुत्र स्थिताः क्व वा संभूताः । वज्रसत्त्व आह । स्वकायवाक्चित्तसंस्थिताः

1. A adds ते । 2. C omits °धातु° । 3. A °रणे° । 4. BC add बुद्धधर्मेषु । 5. C omits °वज्र° । 6. A adds क्व सम्भूतानि । 7. BC omit परमार्थतः......सिद्धीनामसंभवात् । 8. A adds °वज्र° । 9. B रूप्य° । 10. B °प्य° ।

स्वकायवाक्चित्तसंभूताः । भगवन्तः सर्वतथागता आहुः । स्वकायवाक्चित्तवज्रं कुत्र स्थितम् ? [1]आकाशस्थितम् । आकाशं कुत्र स्थितम् ? न क्वचित् ।

अथ ते सर्वबुद्धबोधिसत्त्वा आश्चर्य्यप्राप्ता अद्भुतप्राप्ताः स्वचित्तधर्मताविहारं ध्यायंस्तूष्णीं[2] स्थिता अभूवन्निति ।

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वचित्तसमयसारवज्रसम्भूतिर्नाम पटलः पञ्चदशोऽध्यायः ।

1. A omits. 2. C व्यापन्नं ।

## षोड़शः पटलः ।

अथ भगवन्तः सर्वतथागताः पुनः समाजमागम्य भगवन्तं सर्वतथागतकायवाक्चित्तवज्रं तथागतं सर्वतथागतकायवाक्-चित्तवज्रपदै रध्येष्य सर्वतथागतरत्नवज्रपूजाव्यूहैः पूजयामासुः । अथ भगवान् वज्रपाणिस्तथागतः सर्ववज्रमण्डलसिद्धि[1]समय-राजव्यूहं नाम समाधिं समापद्येदं वज्रकायमण्डलं सर्वबुद्धानां[2] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[3] ।

अथातः संप्रवक्ष्यामि कायमण्डलमुत्तमम् ।
चित्तवज्रप्रतीकाशं सर्व[4]मण्डलमुत्तमम् ॥
षोड़शहस्तं प्रकुर्वीत चतुरस्रं सुशोभनम् ।
मण्डलं सर्वबुद्धानां कायवज्रप्रतिष्ठितम् ॥
तस्याभ्यन्तरतश्चक्रं[5] आलिखेद्विधि[6]वज्रया ।
मुद्रावज्रपदं कुर्यान्मन्त्राणां गुह्यमुत्तमम् ॥
मध्ये वैरोचनपदं अक्षोभ्यादीन् समालिखेत् ।
कायवाक्चित्तवज्राग्रीन्[7] सर्वकोणे[8] निवेशयेत् ॥
क्रोधान् समालिखेत् द्वारि महाबलपराक्रमान् ।
पूजां कुर्वीत मन्त्रज्ञो गुह्यवज्रप्रभाविताम् ॥
एषो हि सर्वक्रोधानां[9] समयो दुरतिक्रमः ।
अवश्यमेव दातव्यं विण्मूत्राद्यं विशेषतः ॥

1. A ° सिंह,° B ° सिद्ध ° । 2. C ° तथागतानां । 3. A उदाजहार ।
4. C ° त्त्व ° । 5. A ° रं चक्रं । 6. BC ° धिना । 7. A ° वज्रश्री ° ।
8. A ° णेषु । 9. A चक्राणां ।

एषो हि सर्वमन्त्राणां[1] समयः कायवज्रिणाम् ।

॥ सर्वतथागतकायमण्डलम् ॥

अथ भगवान् वज्रपाणिस्तथागतः सर्ववाग्वज्रसमयमेघव्यूहं नाम समाधिं समापद्येदं वाग्वज्रमण्डलं स्वकायवाक्चित्तवज्रेभ्य उदाजहार ।

अथातः संप्रवक्ष्यामि वाङ्मण्डलमुत्तमम् ।
चित्तवज्रप्रतीकाशं सर्वमण्डलमुत्तमम् ॥
विंशतिहस्तं प्रकुर्वीत चतुरस्रं विधानतः ।
चतुष्कोणं चतुर्द्वारं सूचयेत् वज्रभावनैः ॥
स्ववाङ्[2]मण्डलपदं वाक्यवज्रगुणावहम् ।
वज्रधर्ममहाराजं विद्वेषमवतारयेत् ॥
तस्य मध्ये महाचक्रमालिखेत्परिमण्डलम् ।
सर्वमुद्रां समासेन आलिखेद्विधितत्परः ॥
अमितायुर्महामुद्रां तस्य मध्ये निवेशयेत् ।
तदेव वज्रपदं रम्यं सर्वेषां परिकल्पयेत् ॥
परिस्फुटं विधानेन कृत्वा मण्डलमुत्तमम् ।
गुह्यपूजां ततः कुर्यादेवं[3] तुष्यन्ति वज्रिणः ॥
विण्मूत्रशुक्रसमयैः पूज्य सिद्धिरवाप्यते ।
एषो हि सर्वबुद्धानां समयो दुरतिक्रमः ॥

॥ सर्वतथागतवाङ्मण्डलम् ॥

अथ भगवान् वज्रपाणिस्तथागतः समन्त[4]मेघव्यूहं नाम समाधिं समापद्येदं परमगुह्यमण्डलरहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

1. A धर्माणां । 2. BC °काय° । 3. B कृत्वा एवं । 4. B °स्त° ।

यस्य वज्रधराग्रस्य मध्ये बिम्बं समालिखेत्॥

भवे[1]न्मण्डलपदं तस्य कायवाक्चित्तगुह्यजम्॥

इति सर्वतथागतकायवाक्चित्तवज्रज्ञानरहस्योऽयं[2] परमगुह्यः।

अथ भगवान् वज्रपाणिस्तथागतः सर्वमण्डलचक्रसम्भवं नाम समाधिं समापद्येदं सर्वमण्डलकायवाक्चित्तगुह्यजं स्वकायवाक्चित्तवज्रेभ्य उदाजहार। ततो मण्डलमन्त्रः॥ मन्त्राक्षरहृदयसूत्राक्षर[3]पदानि॥ हूँ ओँ आः॥

पातनं वज्रसूत्रस्य रजस्यापि निपातनम्।
न कार्यं मन्त्रसत्त्वेन कारयन् बोधिदुर्लभः॥
तस्मात् समयविधानज्ञोऽवतार्य्य[4] मन्त्रदेव[5]तान्।
अधिष्ठानपदं ध्यात्वा मण्डलानां विकल्पनम्॥
वैरोचनमहाराजं लोचनां चावतारयेत्।
कायमण्डलपदं रम्यं कायवज्रगुणावहम्॥
वज्रधर्ममहाराजं सधर्मं चावतारयेत्।
इदं तत् सर्वमन्त्राणां[6] रहस्यं परमशाश्वतम्[7]॥
[8]वज्रसत्त्वमहाराजं मामकीं चावतारयेत्।
इदं तत् सर्वमन्त्राणां[9] रहस्यं परमाद्भुतम्॥
एवं कृतेन सान्निध्यं स्वयमेव मनीषिणः।
आगत्य गुह्यपरमं लिखन्ति हरिषा[10]न्विताः॥

इत्याह च।

1. ABC भव °। 2. BCR ° स्याद् गुह्यसमाजे। 3. C omits हृदय-सूत्राक्षर। 4. AC ° वसार्य। 5. B समयदेव, ° C समतेव। 6. C बुद्धानां। 7. C ° माद्भुतम्। 8. C omits two lines. 9. B. बुद्धानां। 10. AR हर्षा °।

कर्तव्यं मन्त्रसिद्धे च[1] वज्रगुह्यं महाद्भुतम् ।
आकृष्य क्रोधराजेन सर्वबुद्धांस्तु पूजयेत् ॥
त्रिकाल[2]समये पूजा त्रिवज्रामलवज्रिणः ।
कर्तव्यं त्रिवज्रयोगेन मन्त्रसिद्धिप्रवर्तनम् ॥ इति ॥

इत्याह च ॥

सर्वेषामेव मन्त्राणां बलिं दद्यान्महाद्भुतम् ।
विण्मूत्रमांसतैलं च पञ्चमं चित्तसम्भवम् ॥
शुक्रेण सर्वमन्त्राणां प्राशनं[3] समुदाहृतम् ।
एषो हि समयश्रेष्ठो बुद्धबोधिप्रपूरकः ॥
सूत्रस्य पातनमिदं स्वयमेव समाचरेत् ।
वैरोचनं प्रभावित्वा वज्रसत्त्वं विभावयेत् ॥
अथवाऽमृतवज्राख्यं शिष्यं[4] वज्रमहाद्युतिम् ।
विभावयेत् कर्मपदं सर्वबुद्धनिषेवितम् ॥
पञ्चबुद्धमहाराजं सूत्रं वज्रगतं न्यसेत् ।
एषो हि सर्वबुद्धानां रहस्यं परमाद्भुतम् ॥
पञ्चविंशतिभेदेन रज[5]स्यापि निपातनम् ।
इदं तत् सर्ववज्राणां रहस्यं बोधिमुत्तमम् ॥
सर्वेषामेव मन्त्राणां वज्रहूँकारभावना ।
कायवाक्चित्तसमयं[6] पञ्चस्थानेषु भावयेत् ॥
एवं कृतेन सान्निध्यं त्रिवज्राभेद्यवज्रजाः ।
कुर्वन्ति भयसंत्रस्ता वज्रसत्त्वस्य धीमतः ॥

1. ACR ° सिद्धेन । 2. B ° काय, R ° ष्काल । 3. C ° शन, A ° षेन । 4. C लिख्यं । 5. रह ° । 6. A adds दिव्यं ।

न्यासं कलशवज्राणां मन्त्रतन्त्रा[1]न्वितैः स्मृतम्।
वज्रसत्त्वं समाधिस्थं कल्पयेत् दृढ़बुद्धिमान्॥
होमं कुर्वीत मन्त्रज्ञः सर्वसिद्धिफलार्थिनः।
विण्मूत्रमांसतैलाद्यैराहुतिं प्रतिपादयेत्॥
पूर्णां वज्राहुतिं दद्यात् त्रिवज्राद्यं समाचरेत्।
शुक्रं वा अथवा विष्ठामभिमन्त्र्य विधानतः[2]।
भक्षयेद्वज्रयोगेन एवं सिद्धिर्न दुर्लभा॥
कृत्वा वज्र[3]महागुह्यं रहस्यं सर्ववज्रिणाम्॥
स्त्रीरूपमन्त्रचक्रेण स्थिताः सत्त्वार्थचर्यया।

॥ तत्रेदं सर्ववज्रमण्डलमन्त्राराधनरहस्यम्॥

हस्तिमांसं हयमांसं[4] महामांसं च भक्षयेत्।
दद्याद्वै सर्वमन्त्राणामेवं तुष्यन्ति नायकाः॥
प्रत्यहं वज्रशिष्यस्य दर्शयेत् मण्डलं बुधः।
विण्मूत्रमांसकृत्येन वज्रगुह्यपदेन च।
ओँकारं सर्वमन्त्राणां ध्यात्वा ज्वलति तत्क्षणात्॥

इत्याह च भगवान् महामन्त्रवज्रविद्यापुरुषवज्रः।

साधनं सर्वसिद्धीनां महासमयसाधनम्।
साधनीयं प्रयत्नेन बुद्धबोधिमपि स्वयम्॥
अन्तर्द्धानं बलं वीर्यं वज्राकर्षणमुत्तमम्।
सिध्यते मण्डले सर्वं कायवज्रवचो यथा॥
विण्मूत्रं च[5] महामांसं समभागं तु कारयेत्।

1. C तत्त्वा°। 2. C°भावतः। 3. ACR यत्र। 4. Mss add श्वान-मांसं। 5. C विष्ठामूत्रं।

शरावसंपुटे स्थाप्य बुद्धैः सह च संवसेत् ॥

इत्याह च। तत्रेदं सर्वगुह्यवज्रकिङ्करमहासाधनपदं वरम्।

खवज्रमध्यगतं चिन्तेत् क्रोः[1]कारं ज्वालसुप्रभम्।

खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत्।

कायवाक्चित्तपदं तेषां[2] तत्र[3] मन्त्रे निपातयेत् ॥

तत्रेदं कायवाक्चित्तमन्त्रवज्राधिष्ठानपदम्।

॥ आः खँ वीः[4] ॥

वज्रपाणिमहाबिम्बं पद्मपाणिमहाद्युतिम्।

अपराजितमहाबिम्बं ध्यात्वा गुह्यपदं न्यसेत् ॥

तत्रेदं वज्रगुह्यपदम्।

सूर्यमण्डलमध्यस्थमक्षोभ्यं वा प्रकल्पयेत्।

अमितायुर्महाबिम्बं वज्रवैरोचनं तथा।

चोदयेद् हृदये सर्वान् तीव्रदुःखमहाद्युतीन् ॥

तत्रेदं सर्ववज्रहृदयवज्रसंचोदनम्।

॥ आँ ॥

महाशूलै[5]र्महावज्रैरङ्कुशैर्विविधैर्बलैः[6]।

चोदयेद्विधिवद्वज्रं बुद्धबोधिः प्रसिध्यति।

इत्याह च ॥

पर्वतेषु च रम्येषु द्वीपेषु विविधेषु च।

पद्माभ्यन्तरपूर्णेन ध्रुवं बुद्धत्वमा[7]प्नुयात् ॥

षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः।

परिवारगणास्तस्य सिध्यते बोधिवज्रिणः ॥

1. B क्रो, C क्रों। 2. R ततो। 3. C तन्त्र। 4. B आँ खँ वीँ, C (1) वोँ, (2) वो। 5. A °सुरैः। 6. A °रैः। 7. C सिद्धिमवा°।

दशदिक्सर्वबुद्धानां बुद्धक्षेत्राणि कार[1]येत्।
मध्ये स्व[2]देवताबिम्बं ध्यात्वा वज्रेण[3] पातयेत् ॥

इत्याह च।

द्वयेन्द्रियप्रयोगेण जुहुयाद्युतं बुधः।
एषो हि सर्वबुद्धानां समयो दुरतिक्रमः ॥
वैरोचनप्रयोगेण शिष्यं त्रिवज्रसम्भवम्।
आःकारं कायवाक्चित्ते ध्यात्वा वज्रेण गृह्यते ॥
वज्रसत्त्वो महाराजो वैरोचनो महायशाः।
कायवाक्चित्तसमयमधिष्ठानं ददन्ति हि ॥

तत्रेदं महामण्डलप्रवेशनवज्रपदम्।

॥ आः खँ वीर हूँ ॥

[4]सर्वसमयकायवाक्चित्तहृदयमन्त्रवज्रोऽयम्[5]। तत्रेदं महावज्राभिषिकगुह्याज्ञानरहस्यम्।

खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत्।
वाद्यगन्धमहामेघैर्भावयेद्वज्रश्रोत्रधीः[6] ॥

इत्याह च।

त्रिवज्रकायमन्त्रैस्तु[7] सर्षपैस्ताडयेत्[8] व्रती।
अभिषिकं तदा तस्य स्वयमेव ददन्ति हि ॥
अथवा भावयेत् बुद्धान् वज्रसत्त्वसमाधिना।
कलशान् समयाग्रैस्तु धारितान्[9] भावयेत् बुधः[10] ॥

1. B काम,° AR क्राम °। 2. BC ° ऽस्य। 3. AR वज्रे नि °। 4. BC add इति सर्वतथागतकायवाक्चित्तवज्रगुह्याद् गुह्यसमाजे before सर्व °। 5. R ° जापं। 6. AR have instead वाद्यगन्धादिसमयैर्मेघौघान् भावयेद्बुधः। 7. C त्रिकायवज्रमेघैस्तु, B ° मन्त्रैस्तु। 8. CR स्तोत्रयेत्। 9. B वाचितान्, C भाषितान्। 10. C व्रती।

वज्रवैरोचनं चिन्तेत् शिष्यो दृढमतिस्तदा[1] ।
न्यासं कुर्वीत मन्त्रज्ञः कायवाक्चित्तवज्रिणः ॥
तत्रेदं सर्वाभिषेकरहस्यं सर्वाचार्यवाग्वज्रोदीरणम् ।
अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्वबुद्धानां त्रिगुह्यालय[2]सम्भवम् ॥
तत्रेदं सर्वाभिषेक[3]महावज्रप्रार्थनाविधिरहस्यम् ।
बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि त्राणनार्थाय खवज्राद्य ददाहि मे ॥
अभिषेकं तदा तस्य दद्यात् प्रहृष्टचेतसः ।
देवताबिम्बयोगेन हृदयेऽधिपतिं न्यसेत् ॥
मन्त्राक्षरपदं दत्त्वा समयं च विधानतः ।
दर्शयेत् मण्डलं तस्य वज्रशिष्यस्य धीमतः ।
समयं श्रावयेत् गुह्यं सर्वबुद्धैरुदाहृतम् ॥
प्राणिनश्च त्वया घात्या वक्तव्यं च मृषा वचः ।
अदत्तं च त्वया ग्राह्यं सेवनं योषितामपि[4] ॥
अनेन वज्रमार्गेण वज्रसत्त्वान्प्रचोदयेत् ।
एषो हि सर्वबुद्धानां समयः परमशाश्वतः ॥
इत्याह च ॥
मन्त्रं दद्यात् तदा तस्य मन्त्रचोदनभाषितैः ।
समाधिं मन्त्रराजस्य दत्वा गुह्यं समारभेत्[5] ॥

1. AR °तिं सदा । 2. C °गुह्यं वज्र, °R °गुह्यवज्र° । 3. A सर्वशिष्य° । 4. C °येत् योषिता अपि । 5. After this BC repeat a long portion from शुक्रं वा अथवा विष्ठां etc. (p. 117) to बुद्धक्षेत्राणि कारयेत् (p. 119).

धर्मं शृणोति गाम्भीर्य्यं बुद्धभूमिं[1] च प्राप्नुयात्।

इत्याह च भगवान् महासमयवज्रहासः[2]। तत्रेदं सर्व[3]-किङ्करगुह्यवज्ररहस्यम्।

वज्रसत्त्वमहाज्ञानं वाक्यवज्रधरं तथा।
कायवज्रमहान्यासैः[4] किङ्करं चोदयेत्सदा॥

तत्रेदं वज्रज्ञान[5]चक्रं चतुःसमयपदम्। समयचोदनं समयप्रेरणं समयमन्त्रणं समयबन्धनं चेति।

खधातुं विमलं शुद्धं सर्वधर्मविवर्जितम्।
कुर्वन्ति पिण्डरूपेण त्रिवज्राद्भुतरूपिणः॥

इत्याह भगवान् सर्वबुद्धैकपुत्रो महावज्रधरः[6]।

बुद्धं वा वज्रसत्त्वं वा यदीच्छेत् वशमानितुम्।
चिन्तयेद्दिदं महागुह्यं त्रिवज्राग्रधरं महत्॥
खवज्रमध्यगतं चिन्तेत् मञ्जुवज्रं[7] महाबलम्।
पंचबाणप्रयोगेण मुकुटाग्रं[8] तु संस्मरेत्॥
पञ्चस्थानेषु मन्त्रज्ञः क्रूरवज्रेण पा[9]तयेत्।
मूर्च्छितं[10] भावयेत् त्रस्तं[11] बालबुद्धिं[12] महायशाः॥
पद्ममेकमिदं ध्यानं कर्त्तव्यं गुह्यचोदनैः।
रहस्यं सवमन्त्राणां गीतं वज्रार्थबुद्धिना॥
खवज्रमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम्।
हूँकारवज्रमन्त्राद्यैः त्रिवज्रादीन्प्रभावयेत्॥

1. B बोधिं। 2. R °हारः। 3. C सत्त्व°। 4. R °मासैः। 5. BC add °वज्रमन्त्र°। 6. BC वज्रमहासत्त्वः। 7. BC महावज्रं। 8. B रोमकूपाग्रे। 9. B घा°। 10. C °तान्। 11. C °स्तान्। 12. C °द्धीन्।

ओँकारं चक्षु[1]र्गतं ध्यात्वा दर्शयेत[2] विधानतः ।
पश्येत सर्वमन्त्राणां बिम्बं त्रिकायवज्रिणाम् ॥
क्षुत्तृषाद्यैर्महाक्लेशैरिदं योगं विचिन्तयेत् ।
नश्यन्ति[3] सर्वदुःखानि चित्तवज्रवचो यथा ॥
वैरोचनमहाबिंबं ध्यात्वा सर्वार्थसम्पदम् ।
वंकारं वक्त्रगतं ध्यात्वा ओँकारं जिह्वागं न्यसेत् ॥
आलयं सर्वभक्ष्याणां चिन्तामणिविभूषितम् ।
सर्वदुःखहरं शान्तं ज्ञानवज्रप्रभावितम् ॥

इत्याह भगवान् चिन्तामणिवज्रः । अथ भगवान् वज्रपाणि[4]स्तथागतः महावीरवज्रतथागतं वज्रभावनावज्रपदाग्रं वाग्वज्रेभ्यो निश्चारयामास[5] ।

॥ वीः ॥

खवज्रमध्यगतं चिन्तेत् बुद्धमण्डलसुप्रभम् ।
त्रिवज्रकाययोगेन निष्पाद्येदं विचिन्तयेत् ॥
सर्वालङ्कारसंपूर्णं पीतं वज्रविजृम्भितम् ।
जटामुकुटधरं शान्तं ध्यात्वा सर्वं समारभेत् ।

॥ वीरवज्रोर्मिमाला नाम समाधिः ॥

अथ भगवान् वज्रधरः समन्तनिर्घोषवज्रं नाम समाधिं समापद्येदं महावज्रभावनापदं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

1. A चक्र ° । 2. A ° येदिदं । 3. AC भ्रश्यन्ते । 4. BC add ° वज्र ° । 5. A ° लयेत्, CR ° रयत् or ° रयेत् ।

॥ चुँ[1] ॥

स्ववज्रमध्यगतं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धमेघान् विधानेन त्रिवज्रात्मा महायशाः ॥
पातनं कायवाक्चित्ते चुन्द[2]वज्रीं विभावयेत् ।
सर्वालङ्कारसम्पूर्णां सितवर्णां विभावयेत् ॥
वज्रसत्त्वमहाराजं ध्यात्वा मन्त्रपदं न्यसेत् ।
॥ वज्ररश्मिज्ञानसमयं[3] नाम समाधिः ॥

अथ भगवान् वज्रपाणिस्तथागतः सर्वाशावज्रसम्भोगं नाम समाधिं समापद्येदं समाधिवज्र[4]नयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

॥ जँ ॥

स्ववज्रमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
सर्वबुद्धान् विधानेन पातयेत् वज्रभावनैः ॥
निष्पादयेत् महायक्षं जम्भलं द्रव्यसाधकम् ।
यक्षरूपधरं शान्तं जटामुकुटवज्रिणम् ॥
पञ्चबुद्धान् विधानेन पञ्चस्थानेषु भावयेत् ।
वज्रामृतोदकं तस्य दद्यात् ध्यानपदे स्थितः ॥
वज्रसत्त्वं विधानेन मुकुटे तस्य चिन्तयेत् ।
एवं तुष्यति यक्षेन्द्रो जम्भलेन्द्रो महाद्युतिः ॥
॥ वज्रसमयद्रव्याराधनकेतुश्रीर्नाम समाधिः ॥

अथ भगवान् वज्रपाणिस्तथागतो वज्रकामोपभोगश्रियं नाम

1. A omits, BC वूँ । 2. A चन्द्र °, BC वून्द ° । 3. ACR वज्रसमयज्ञानरश्मिमाला । 4. BC ° चक्र ° ।

समाधिं समापद्येदं सर्वयक्षिणीसमयवज्रपदं स्वकायवाक्-
चित्तवज्रेभ्यो निश्चारयामास ॥

॥ च्चिं[1] ॥

खवज्रधातुमध्यस्थं चतुरस्रं सुशोभनम् ।
चतूरत्नमयं सर्वं पुष्पगन्धसमाकुलम् ॥
खधातुं सर्वयक्षिण्यैः परिपूर्णं विचिन्तयेत्[2] ।
हृदयमन्त्रपदं ध्यात्वा वज्रयोगं समारभेत् ॥

॥ सर्वयक्षिणीसमताविहारभावनवज्रो नाम समाधिः ॥

अथ भगवान् वज्रपाणिस्तथागतः सर्वबुद्ध[3]मन्त्रसिद्धि-
विजृम्भितवज्रं नाम समाधिं समापद्येमां हीनसिद्धिं स्वकाय-
वाक्चित्तवज्रेभ्यो निश्चारयामास ।

कायवाक्चित्तसंसिद्धा[4] बहुरूपधरप्रभाः ।
जाम्बूनदप्रभाकारा हीनसिद्धिसमाश्रिताः ॥
अन्तर्द्धानादिसंसिद्धौ भवेत् वज्रधरः प्रभुः ।
यक्षराजादिसंसिद्धौ भवेत् विद्याधरः प्रभुः[5] ॥

तत्रेमानि सर्ववज्रसिद्धिरूपगुह्यमन्त्रसिद्धीनि ।

सर्वाणि चारुरूपाणि मन्त्रसिद्धिमनोषितैः ।
प्रीणयन्ति दर्शनेन लोकधातुं समन्ततः ॥
उष्णीषः सर्वसिद्धीनां भवेत् चिन्तामणिप्रभुः ।
बुद्धबोधिकरं श्रेष्ठं बुद्धवज्रप्रभावितम् ॥

इत्याह भगवान् सर्वाशापरिपूरकवज्रः ।

1. C च्चं । 2. BC add पातयेत् त्रिवज्रयोगेन बिम्बमेकं विचिन्तयेत् । त्रिकर्मवज्रयोगेन ध्यानं तस्य विचिन्तयेत् । मञ्जुवज्रः समाधिस्थो मुकुटे क्रोधं प्रभावयेत् ॥ 3. BC ° वज्र ° । 4. C ° शुद्धो, B ° शुद्धा । 5. C omits this line.

अथ भगवान् वज्रपाणिः सर्वतथागताधिपतिः सर्वतथागतकायवाक्चित्तवज्रविद्याव्रतसमादानचर्य्यं स्वकायवाक्चित्तवज्रभ्यो निश्चारयामास ।

कायवाक्चित्तवज्राणां[1] कायवाक्चित्तभावनम् ।
स्वरूपेणैव तत् कार्यमेव[2] सिद्धिरवाप्यते ।

तत्रेदं स्वकायवाक्चित्तविद्याव्रतम् ।

जटामुकुटधरं बिम्बं सितवर्णनिभं महत् ।
कारयेत् विधिवत् सर्वं मन्त्रसंवरसंव्रतम् ॥
षोड़शाब्दिकां गृह्य सर्वालङ्कारभूषिताम् ।
चारुवक्त्रां विशालाक्षीं प्राप्य विद्याव्रतं चरेत् ।
लोचनापदसम्भोगो[3] वज्रचिह्नं तु[4] भावयेत् ॥
मुद्रामन्त्रविधानज्ञो मन्त्रतन्त्रसुशिक्षिताम् ।
कारयेत् ताथागतीं भार्यां बुद्धबोधिप्रतिष्ठिताम् ॥
गुह्यपूजां प्रकुर्वीत चतुःसन्ध्यं महाव्रती ।
कन्दमूलफलैः सर्वं भोज्यं भक्ष्यं समाचरेत् ॥
एवं बुद्धो भवेत् शीघ्रं महाज्ञानोदधिः प्रभुः ।
षण्मासेनैव तत्सर्वं प्राप्नुयात् नात्र संशयः ॥ इति ॥
परस्वहरणं नित्यं घातनं च महाद्भुतम् ।
रागवज्रपदं गुप्तं[5] इदं संवरसंव्रतम् ॥
रागवज्राङ्कुशीं भार्यां[6] मामकीं गुणमेखलाम् ।
वाग्वज्राग्रचित्तेभ्य इदं पूजयति सर्वथा ॥
स्वमुद्रां वाऽथवा चिन्तेत् ध्यानं चाक्षरवज्रिणाम् ।

1. A omits.　2. C ° येणैव ।　3. BC ° गैः ।　4. BC चिन्हैस्तु ।
5. BCR भुंक्ता　6. C कार्यां ।

पञ्चबुद्धाश्च सर्वज्ञाः[1] प्रीणान्ते नात्र संशयः ॥
वने[2] भिक्षां भ्रमेन्नित्यं साधको दृढनिश्चयः ।
ददन्ति भयसंत्रस्ता भोजनं दिव्यमण्डितम् ।
अतिक्रमेत् यदि[3] वज्रात्मा नाशं वज्राक्षरं भवेत् ॥
सुरीं नागीं महायक्षीमसुरीं मानुषीमपि ।
प्राप्य विद्याव्रतं कार्यं त्रिवज्रज्ञानसेवितम् ॥
इदं तत् सर्वमन्त्राणां गुह्यं तत्त्वं महानयम् ।
त्रिवज्रज्ञान[4]सम्भूतं बुद्धबोधिप्रवेशकम् ॥

इत्याह भगवान् सर्वतथागतविद्याव्रतसमयतत्त्ववज्रः ।

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वसिद्धिमण्डलवज्राभिसम्बोधिर्नाम पटलः षोड़शोऽध्यायः ॥

1. B पञ्चबुद्धाश्च सम्बुद्धाः, BC एवं बुद्धापि । 2. C वनेषु । 3. BC त्रि° ।
4. C °चक्र° ।

सप्तदश: पटल: ।

अथ भगवन्त: सर्वतथागता: पुन: समाजमागम्य भगवन्तं सर्वतथागतकायवाक्चित्तवज्रं तथागतं अनेन स्तोत्रराजेनाध्येषितवन्त: ।

अक्षोभ्यवज्र महाज्ञान वज्रधातु महाबुध ।
त्रिमण्डल त्रिवज्राग्र घोष वज्र[1] नमोऽस्तु ते ॥
वैरोचन महाशुद्ध[2] वज्रशान्त महारत ।
प्रकृतिप्रभास्वरान् धर्मान् देश वज्र नमोऽस्तु ते ॥
रत्नराजसुगाम्भीर्य खवज्राकाशनिर्मल ।
स्वभावशुद्धनिर्लेप कायवज्र नमोऽस्तु ते ॥
वज्रामित[3]महाराज निर्विकल्प खवज्रधृक् ।
रागपारमिताप्राप्त भाष वज्र नमोऽस्तु ते ॥
अमोघवज्र संबुद्ध[4] सर्वाशापरिपूरक ।
शुद्धस्वभावसंभूत वज्रसत्त्व नमोऽस्तु ते ॥
एभि: स्तोत्रपदै: शान्तै: सर्वबुद्धप्रचोदितै: ।
संस्तूयाद्वज्रसम्भोगात्[5] सोऽपि वज्र[6]समो भवेत् ॥
अथ वज्रधर: शास्ता सर्वबुद्धानुकम्पक: ।
वज्रगुह्यपदं शुद्धं वाग्वज्रं समुदीरयत् ॥
अहो हि सर्वबुद्धानां धर्मधातु महाक्षरम् ।
प्रकृतिप्रभास्वरं शुद्धं खधातुमिव निर्मलम् ॥ इति ॥

1. BC गुह्य । 2. B शान्त । 3. B ° मृत । 4. BC अमोघसिद्धिवज्र । 5. R ° गां । 6. B ° बुद्ध ° ।

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं सर्वबुद्धकायवज्र-समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

समयचतुष्टयं रक्ष्यं[1] बुद्धैर्ज्ञानोदधिप्रभैः ।
महामांसं सदा भक्ष्यं इदं समयमुत्तमम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं सर्वबुद्धवाग्वज्र-समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

समयचतुष्टयं रक्ष्यं वाक्यवज्रमहाक्षरैः ।
विण्मूत्रं च सदा भक्ष्यमिदं गुह्यं महाद्भुतम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं वज्रधरचित्तवज्र-समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

समयचतुष्टयं रक्ष्यं वज्रसत्त्वैर्महर्द्धिकैः ।
रुधिरं शुक्रसंयुक्तं सदा भक्ष्यं दृढव्रतैः ॥
कायवाक्चित्तवज्राणां समयोऽयं महाद्भुतः ।
शाश्वतं सर्वबुद्धानां संरक्ष्यो वज्रधारिभिः[2] ॥
यश्चेमं[3] समयं रक्षेद्वज्रसत्त्वो महाद्युतिः ।
कायवाक्चित्तगतं तस्य बुद्धो भवति तत्क्षणात् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः प्रत्येकबुद्धसमयवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

देशना कायिकी तेषां कायवज्रप्रतिष्ठिता ।
सत्त्वावतारणं शीलसमयः परमशाश्वतः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः श्रावकशिक्षा[4]समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

1. B रक्षेद् °। 2 BC ° चारिणैः। 3. A यश्चर्म °। 4. B ब्रह्म. R शिष्य °।

दशकुशलान् कर्मपथान् कुर्वन्ति ज्ञानवर्जिताः[1] ।
हीनाधिमुक्तिकास्सर्वे समयोऽयं महाद्भुतः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिर्ब्रह्मसमयं स्वकायवाक्-चित्तेभ्यो निश्चारयामास ॥

मोहमात्रेण यत्कर्म करोति भयभैरवम् ।
बुद्धबोधिप्रणेतारं भवते[2] कायवज्रता[3] ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः रुद्रसमयं स्वकाय-वाक्चित्तेभ्यो निश्चारयामास ॥

त्रैधातुकस्थितां सर्वामङ्गनां सुरतविह्वलाम्[4] ।
कामयेत् वि[5]विधैर्भावैः समयः परमाद्भुतः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः विष्णुसमयं स्वकाय-वाक्चित्तवज्रेभ्यो निश्चारयामास ॥

यावन्तः सत्त्व[6]सम्भूताः त्रिवज्रा[7]भेद्यसंस्थिताः ।
मारयेत् ध्यानवज्रेण वज्रधातुमपि स्वयम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः त्रिवज्रसमयं स्वकाय-वाक्चित्तेभ्यो निश्चारयामास ॥

कायवज्रो भवेत् ब्रह्मा वाग्वज्रस्तु महेश्वरः ।
चित्तवज्रधरो राजा सैव विष्णुर्महर्धिकः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वयक्षयक्षिणीसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

असृक्पिशिताहारा नित्यं कामपराः स्त्रियः ।
आराधयेत् महावज्रसमयैरेभिर्द[8]रासदैः ॥

1. B °वज्रिणः । 2. C °ने । 3. B °वर्जिता । 4. BC त्रिवज्र-सम्भवाम् । 5. C चि° । 6. A सर्व° । 7. BC °काया° । 8. A °रतिदु° ।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वभुजगेन्द्रराज्ञी-समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

पैशुन्यचौरिता[1]हाराः कामगन्धपराश्च ताः ।
साधयेत् समयैरेभिरन्यथा क्लिश्यते ध्रुवम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिरसुरकन्यासमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

क्रूरा मानभरा[2]क्रान्ता गन्धपुष्पोपभोगजाः[3] ।
समयो वज्रपाञ्चालिः[4] दुर्दान्ता वज्र[5]भैरवाः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः राक्षसस्त्रीसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कपालास्थिधूपतैलवसया प्रीणनं महत् ।
समयः सर्वभूतानां पवित्रो[6]ऽयं महार्थकृत् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रडाकिनी-समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

विण्मूत्ररुधिरं भक्षेत्[7] मद्यादींश्च पिबेत् सदा ।
वज्रडाकिनीयोगेन मारयेत् पटलक्षणैः ॥
स्वभावेनैव संभूता विचरन्ति त्रिधातुके ।
आचरेत् समयं कृत्स्नं सर्वसत्त्व[8]हितैषिणा ॥

॥ सर्वत्रैधातुक[9]समयसमवसरणो नाम समाधिः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः कायसिद्धिसमयवज्रं कायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

1. A चौरा°। 2. C मारसमा,° B माररागवरा°। 3. C °काः। 4. B °पाताले, C योषितां। 5. A °ख्याति°। 6. BC °वज्र°। 7. C भक्ष्यं। 8. A °सिद्धि°। 9. BC add वज्रं।

कायिकं त्रिविधं सर्वं कारयेत् वज्रसम्भवम् ।
बुद्धकार्यकरं नित्यं सत्त्वधातोः समन्ततः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिर्वाक्सिद्धिसमयवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

वाक्यकर्मकृतं[1] कृत्स्नं त्रैलोक्यामलमण्डलम् ।
वाक्सिद्धिपदरम्योऽयं समयो[2] दुरतिक्रमः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः चित्तसिद्धिवज्रसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

मनोवज्रमयं सर्वं भावयेत् दृढवज्रधृक् ।
एषो हि समयः प्रोक्तः त्रिवज्राभेद्यवज्रिणाम् ॥

इत्याह भगवान् समन्तभद्रो[3] वज्रसत्त्वः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रवज्रसारसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

बुद्धांश्च बोधिसत्त्वांश्च प्रत्येकश्रावकांस्तथा[4] ।
कायवाक्चित्तसंयोगैर्वन्द[5]यन् नाशमाप्नुयात् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वतथागतकायवाक्चित्तवज्रध्यानसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

वज्रसत्त्वस्य सर्वत्र कायवाक्चित्तमण्डले ।
ध्यानं त्रिवज्रयोगेन ध्यातव्यं मन्त्रजापिना ॥

1. AC ° पदं । 2. A ° योऽपि, R ° योऽयं । 3. A समन्तसुन्दरो ।
4. For this line BC read न बुद्धान् बोधिसत्त्वांश्च प्रत्येकजिनश्रावकान् ।
5. BC ° दर्श ° ।

[1]अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रवज्रसाधन-समयसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

सत्त्वधातुं समासेन ध्यानवज्रेण चोदयेत् ।
त्रिवज्रवन्दनाग्राग्रः समयो वज्रसम्भवः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सेवा[2]साधनोपसाधनमहासाधन[3]समयसम्बरं[4] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

स्वधातुं विण्मूत्रवज्रेण[5] परिपूर्णं विचिन्तयेत् ।
दद्यात् त्रियध्वबुद्धेभ्यः समयः परमशाश्वतः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रान्तर्धानसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कामयेत् प्रतिदिनं वज्री[6] चतुःसन्ध्यां यथोत्तमम् ।
द्रव्यं चोप[7]हरेत् नित्यं समयो वज्रपूरकः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वविद्याधरसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कायवाक्चित्तवज्राणां मुकुटे ध्यानं विचिन्तयेत् ।
त्रिवज्रसमयैः सर्वैः क्रुद्धै[8]र्जेतुं न शक्यते ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रधरादिकर्मिकसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

भ[9]जने कायवज्रस्य बहिर्वज्रधरस्य च ।
वज्रधर्मैः[10] सदा कार्या[11] सूत्रोद्घाटविधिक्रिया ॥

1. C omits from here to समयो वज्रसम्भवः below. 2. A सर्व° । 3. C omits °महासाधन° । 4. BC °सम्भवं । 5. C योगेन । 6. BC मन्त्री । 7. B वापि, C चापि । 8. BC °द्धैः । 9. A भो° । 10. B धर्मवज्र° । 11. B कार्यं ।

इत्याह भगवान् स्वभावशुद्धवज्रः।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रधरस्वकायवाक्चित्तहृदयवज्रसमतां विचिन्त्य तूष्णीमभूत्॥

अथ खल्वनभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वाः सर्वतथागतान् प्रणिपत्यैवमाहुः। किमयं भगवान् सर्वतथागताधिपतिर्वज्रधरः सर्वतथागतबोधिसत्त्वपर्षन्मण्डलमध्ये तूष्णीम्भावेनाधिवासयति।

अथ भगवान सर्वतथागताधिपतिस्तान् सर्वबोधिसत्त्वानेवमाह। कायवाक्चित्तवज्रानुपलब्धिस्वभावाक्षरपदं कुलपुत्रा अयं सर्वतथागतकायवाक्चित्तवज्राधिपतिः निःस्वभावाक्षरपदं विचार्य तूष्णीं[1] व्यवस्थितः॥

अस्य च कुलपुत्राः सर्वतथागताधिपतेः चिन्तया एतदभूत्॥

कायाक्षरमनुत्पन्नं वाक्चित्तपदलक्षणम्।
स्ववज्रकल्पनाभूतं मिथ्यासंग्रहसंग्रहम्॥ इति॥

अथ मञ्जुश्रीप्रमुखा महाबोधिसत्त्वाः तान्सर्वतथागतानेवमाहुः। मा भगवन्तः सर्वतथागता वाग्वज्रपदं मिथ्यासमुदयेन कल्पयथ। तत्कस्मात् हेतोः। सर्वतथागतवज्रधातुष्वव[2]चरितगतानुगतिकोऽयं सर्वतथागतकायवाक्चित्तवज्राधिपतिः। तत्कस्मात् हेतोः। सन्ति ब्रह्माद्या महाबोधिसत्त्वा महाभिज्ञाज्ञानसंप्राप्ताः सर्वधर्मलक्षणस्वभावमजानन्त एवं विकल्पयन्ति॥ किमयं सर्वतथागतमहावज्रात्मा सर्वतथागतधर्मवज्रतत्त्वमनभि[3]ज्ञाय गुह्याक्षरं निर्दिशतीति।

1. B तुष्णीभावेन। 2. B स्वभावे, C स्वभाव°। 3. B °मवि°।

अथ भगवन्तः सर्वतथागतास्तान् बोधिसत्त्वानेवमाहुः। तिष्ठन्तु तावत् भवन्तो महाबोधिसत्त्वा वयमपि सर्वतथागतकायवाक्चित्तवज्रगुह्याक्षरं प्राप्य कायवाक्चित्तबोधिं न जानीमहे। तत्कस्मात् हेतोः। निःस्वभावाक्षरसंभूत अनुत्पादवज्राभिसंबोधिर्यावन्तः कुलपुत्राः सत्त्वाः सत्त्वसंग्रहेण संगृहीताः सर्वे ते बोधिप्रतिष्ठिताः बुद्ध[1]वज्राः। तत्कस्मात् हेतोः। कायवाक्चित्तवज्रज्ञानप्राप्ता बताभी सत्त्वास्त्रिकायवज्रधर्मता[2]मुपादाय।

अथ वज्रपाणिः सर्वतथागतकायवाक्चित्तवज्राधिपतिस्तान् सर्वतथागतबोधिसत्त्वांश्चैवमाह॥

स्वभावशुद्धनैरात्म्ये धर्मधातुनिरालये।
कल्पना वज्रसंभूता गीयते न च गीयते॥

अथ भगवन्तः सर्वतथागता भगवन्तं महावज्रपाणिं सर्वतथागत[3]स्वामिनं नमस्कृत्यैवमाहुः। कुत इमानि भगवन् सर्वतथागतकायवाक्चित्तवज्रसिद्धीनि समवसरन्ति, क्व वा प्रतिष्ठितानि।

सर्वतथागताधिपतिर्वज्रधरं प्राह। स्वकायवाक्चित्तवज्र[4]समतासन्तानवज्रप्रतिष्ठितानि भगवन्तः सर्वतथागताः सर्वसिद्धीनि सर्ववज्रज्ञानानि सर्वं यावत् त्रैधातुकमिति।

सर्वतथागताः प्रोचुः। सर्वतथागतकायवाक्चित्तवज्र[5]सिद्धीनि सर्वं त्रैधातुकं च भगवन् कुत्र स्थितम्। सर्वतथागत[6]ज्ञानाधि-

1. B °क्रुद्ध°। 2. B °वचना,° C °वरणा°। 3. R सर्वत्र।
4. B वज्राधिपति। 5. BC omit °वज्र°। 6. A adds वज्र°।

पतिः प्राह । आकाशधातुप्रतिष्ठितानि भगवन्तः सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रसिद्धीनि सर्वं त्रैधातुकं च । सर्वतथागताः प्रोचुः । आकाशं भगवन्[1] कुत्र स्थितम् । वज्रधरः प्रोचुः । न क्वचित् ।[2]

अथ ते सर्वतथागता बोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता इमं धर्मघोषमकार्षुः ।

अहो वज्र अहो वज्र अहो वज्रस्य देशना ।
यत्र न कायवाक्चित्तं तत्र रूपं विभाव्यते ॥
अथ वज्रधरः शास्ता सर्वबुद्धनमस्कृतः ।
त्रिवज्राग्र्यो महाग्र्याग्र्यस्त्रिवज्रः परमेश्वरः ॥
भाषते सर्वसिद्धीनां विद्यापुरुषभावनाम् ।
खवज्रधातुमध्यस्थं भावयेत् बुद्धमण्डलम् ॥
कायवज्रं प्रभावित्वा वज्रं मूर्ध्नि प्रभावयेत् ।
त्रिमुखं त्रिकायसम्भूतं विस्फुरन्तं विचिन्तयेत् ॥
वज्रचक्रधरं ध्यात्वा शीघ्रं बोधिमवाप्नुयात् ।
कुलभेदेन[3] सर्वेषामिदं गुह्यं विचिन्तयेत् ।
अन्यथा भावना तेषां सिद्धिर्भवति नो[4]त्तमा ।

इत्याह च भगवान् विद्यापुरुषवज्रगुह्यः ॥

धातु[5]भूतां महाराज्ञीं प्रीणयन्तीं विचिन्तयेत् ।
एवं तुष्यन्ति ते वृषभाः वज्रकायत्रिलक्षणाः[6] ॥
यश्चेदं भावयेत्कश्चिद्बोधिसत्त्वो महायशाः ।
त्रिकायसिद्धिमाप्नोति सप्ताहेन महाद्युतिः ॥

1. AR omit. 2. A omits this sentence. 3. B ° धर्मेण । 4. Mss. न चो ° । 5. AR वान्त ° । 6. A त्रिरच्चिताः, BC त्रिलच्चिताः ।

अथ भगवान् वज्रपाणिः सर्वतथागताधिपतिः पुनरपि कायवाक्चित्तवज्रसमुच्चयगुह्यरहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

कायवाक्चित्तसमयं महामुद्रार्थकल्पनाम् ।
भावयेत् विधिवत् सर्वान् क्षणात् बुद्धत्वमाप्नुयात् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधककायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

हस्तमुद्रां न बध्नीयात् यदीच्छेत् सिद्धि[1]मुत्तमाम् ।
समयः सर्वमन्त्राणां नातिक्रम्यो जिनै[2]रपि ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वबुद्धसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

विण्मूत्रशुक्ररक्तानां जुगुप्सां नैव कारयेत् ।
भक्षयेत् विधिना नित्यमिदं गुह्यं त्रिवज्र[3]जम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि वाग्वज्रसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

त्रैधातुकपथे रम्ये यावन्त्यो योषितः स्मृताः ।
कामयेत् विधिवत् सर्वा वाग्वज्रैर्न जुगुप्स्यते ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि चित्तवज्रसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

यावन्तः सर्वसमयास्त्रिवज्रकाय[4]संस्थिताः ।
प्रीणयन्ति[5] वज्रसमयैः चित्तवज्रं न जुगुप्सयेत् ॥

1. BC °बोधि°। 2: BC बुधैः। 3. B °गुह्य°। 4. BC °ज्ञान°। 5. A °न्ते।

इत्याह भगवान् त्रिवज्रसमयः[1] । अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतगुह्यवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

पञ्चस्कंधाः समासेन पञ्चबुद्धाः प्रकीर्तिताः ।
वज्र-आयतनान्येव बोधिसत्त्वाग्रामण्डलमिति ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि त्रैधातुकसमुच्चय[2]वज्रं[3] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

पृथिवी लोचना ख्याता अब्धातुर्मामकी स्मृता ।
पाण्डराख्या भवेत्तेजो[4] वायुस्तारा प्रकीर्त्तिता ।
खवज्रधातुसमयः सैव वज्रधरः स्मृतः ॥

इत्याह भगवान् सर्वतथागतभुवनेश्वरो महावज्रसत्त्वः । अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः सर्वतथागतसमताविहारं नाम समाधिं समापन्नः । समापद्य च सर्वतथागतपर्षन्मण्डलमवलोक्य तूष्णीमभूत् ।

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वः सर्वतथागतान् प्रणिपत्यैवमाह । सर्वतथागतकायवाक्चित्तवज्र[5]गुह्यसमाजाभिषिक्तो[6] भगवान् वज्राचार्यः सर्वतथागतैः सर्वबोधिसत्त्वैश्च कथं द्रष्टव्यः । सर्वतथागताः प्राहुः । बोधिचित्तो वज्र इव कुलपुत्र सर्वतथागतैः सर्वबोधिसत्त्वैश्च द्रष्टव्यः । तत्कस्मात् हेतोः । बोधिचित्तश्चाचार्यश्चाद्वयमेतदद्वैधीकारम् । यावत्[7] कुलपुत्र संक्षेपेण कथयामः । यावन्तो दशदिग्लोकधातुषु बुद्धाश्च

1. B adds वज्रः । 2. C ° समय ° । 3. BC चक्रं । 4. ABR तेजोधातुस्तु पाण्डराख्याता । 5. A adds रहस्यं ° । 6. B ° भिन्नो । 7. BC एवं ।

बोधिसत्त्वाश्च तिष्ठन्ति ध्रियन्ति यापयन्ति च, सर्वे ते त्रिष्कालमागत्य[1] तमाचार्यं सर्वतथागतपूजाभिः संपूज्य स्वस्वबुद्धक्षेत्रं पुनरपि प्रक्रामन्ति, एवं च वाग्वज्राक्षरपदं निश्चारयन्ति। पितास्माकं सर्वतथागतानां मातास्माकं[2] सर्वतथागतानाम्। तद्यथापि नाम कुलपुत्र यावन्तो बुद्धा[3] भगवन्तो[3] दशसु दिक्षु विहरन्ति तेषां च बुद्धानां भगवतां यावत् कायवाक्चित्तवज्रजः पुण्यस्कन्धः स च पुण्यस्कन्ध आचार्यस्यैव[4] रोमकूपाग्रविवरे विशिष्यते। तत्कस्य हेतोः। बोधिचित्तं कुलपुत्र सर्वबुद्धज्ञानानां[5] सारभूतमुत्पत्तिभूतं यावत् सर्वज्ञज्ञानाकरमिति।

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भीतः सन्त्रस्त-[6] मानसस्तूष्णीमभूत्।

अथ खलु अक्षोभ्यस्तथागतो रत्नकेतुस्तथागतोऽमितायुस्तथागतोऽमोघसिद्धिस्तथागतो वैरोचनस्तथागतः सर्वधर्म[7]सिद्धिसमयालम्बनवज्रं नाम समाधिं समापद्यैतान् सर्वबोधिसत्त्वानामन्त्रयते स्म। शृण्वन्तु भगवन्तः सर्वबोधिसत्त्वाः येऽपि[8] ते दशसु दिक्षु बुद्धा भगवन्तस्त्र्यध्ववज्रज्ञानसंभूतास्तेऽपि सर्वे[9] गुह्यसमाजाभिषिक्तं आचार्यमागत्य पूजयन्ति नमस्कुर्वन्ति च। तत्कस्मात् हेतोः। शास्ता सर्वबुद्धबोधिसत्त्वानां सर्वतथागतानां च स एव भगवान् महावज्रधरः सर्वबुद्धज्ञानाधिपतिरिति।

1. B ° मालभ्य। 2. C यावच्छास्तास्माकं। 3. AR omit. 4. A ° क °। 5. A ° बुद्धानां। 6. A सन्तम °। 7. BC सर्ववज्रधरः। 8. A पथि। 9. BC omit.

[1]अथ ते सर्वे[2] महाबोधिसत्त्वाः तान् सर्वतथागतानेवमाहुः । सर्वतथागतकायवाक्चित्तसिद्धीनि भगवन्तः कुत्र स्थितानि क्व वा संभूतानि । सर्वतथागताः प्राहुः । त्रिकायगुह्यं सर्वतथागतकाय[3]वाक्चित्तं वज्राचार्यस्य कायवाक्चित्तवज्रे स्थितम् । महाबोधिसत्त्वा आहुः । कायवाक्चित्तगुह्यवज्रं कुत्र स्थितम् । सर्वतथागताः प्राहुः । आकाशे स्थितम् । महाबोधिसत्त्वाः प्राहुः । आकाशं कुत्र स्थितम् । सर्वतथागताः प्राहुः । न क्वचित् । अथ ते महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ताः तूष्णींस्थिता अभूवन् ।

अथ भगवान् वज्रपाणिस्तथागतः सर्वतथागतकायवाक्चित्त[4]गुह्यवज्रसमाधेर्व्युत्थाय सर्वतथागतान् सर्वबोधिसत्त्वांश्चामन्त्रयते स्म । शृण्वन्तु भगवन्तः सर्वतथागताः सर्वबोधिसत्त्वाश्च सर्वतथागत[5]बोधिसत्त्वसंभववज्रं नाम महामण्डलम् ।

अथ खलु सर्वतथागता बोधिसत्त्वाश्च कृताञ्जलिपुटा भगवन्तं वज्रधरमेवमाहुः । देशयतु भगवान् देशयतु सुगतो महामण्डलमिति ।

खधातुमध्यगतं चिन्तेत् चतुरस्रं सुशोभनम् ।
बुद्धमण्डलयोगेन ध्यानवज्रं प्रचोदयेत् ॥
वज्रमण्डलध्यानेन आसनं सर्वचक्रि[6]णाम् ।
पूजां तेनैव विधिना कुर्वीत मतिमान् सदा ॥
आचार्यं हृदये ध्यात्वा अभिषिक्तं समारभेत् ।
खधातुं सर्वबुद्धैस्तु परिपूर्णं विचिन्तयेत् ॥

1. B omits the whole paragraph. 2. A omits. 3. C त्रिगुह्यकाय° । 4. AR adds वज्रधर । 5. A °तो । 6. BC वज्रि° ।

पातयेत् विधिवत् सर्वान् अभिषेकपदैस्त्रिभिः ।
अनेन बोधिमाप्नोति सर्वसत्त्वहितैषिणीम् ।
सिध्यति कायवाक्चित्तं सर्वसिद्धिमहाद्भुतम् ॥

॥ सर्वबुद्धबोधिसत्त्वसमयचक्रं नाम ध्यानमण्डलम् ॥

अथ खलु वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतवज्रयोगं[1] नाम कायवाक्चित्तगुह्यं[2] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ हूँ क्रीः[3] खँ ॥

खधातुमध्यगतं चिन्तेदस्थिमांसादिमण्डलम् ।
त्रिकायवाक्चित्तहृदये वज्रसत्त्वं वि[4]भावयेत् ॥
क्रूरं विकृतं संक्रुद्धं नीलोत्पलसमप्रभम् ।
चतुर्भुजं विधानेन कपाल[5]हस्तं विभावयेत् ॥
पञ्चरश्मिप्रभोद्योतां स्वजिह्वां भावयेत् व्रती ।
ध्यानमन्त्रप्रयोगेण रुधिराकर्षणमुत्तमम् ॥
त्रिशूलं वज्रसमयं कीलकं दारुणोत्तमम्[6] ।
पीड़येत् वज्रयोगेन बुद्धकाय[7]मपि स्वयम् ॥ इति ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि वज्राहारसमयकृत्यार्थं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

अन्नं वा अथवा पानं यत्किञ्चित् भक्षयेत् व्रती ।
विण्मूत्रमांसयोगेन विधिवत् परिकल्पयेत् ॥

1. AR योगवज्रं । 2. BC समयवज्रं । 3. R क्रौं । 4. BC ° सत्त्वस्य ।
5. A कर ° । 6. BC ° मे । 7. B ° यैं ।

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागत-कायवाक्चित्तवज्रपूजाग्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

पञ्चोपहारपूजाग्रैः पूजनं च प्रकल्पयेत् ।
एषो हि सर्ववज्रा[1]णां समयो दुरतिक्रमः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागत-कायवाक्चित्त[2]पूजारहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

द्वयेन्द्रियप्रयोगेण स्वशुक्रादिपरिग्रहैः ।
पूजयेत् विधिवत् सर्वान् बुद्धबोधिमवाप्नुयात् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागत-कायवाक्चित्तसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

सत्त्वधातोरनन्तस्य मातां[3] समयधारि[4]णीम् ।
काये त्रिवज्रसमयैः[5] सम्बरोऽयं महाद्भुतः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधक-सम्बरवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

[6]कायवाक्चित्तसंभोगं त्रिगुह्यालयवज्रजम् ।
साधयामि अहं भद्रं संशयो नात्र सर्वथा ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधक-वज्रसत्त्वसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

1. BC मन्त्रा° । 2. cadd °वज्र° । 3. A मात्रां । 4. C °र° । 5. BC कामयेत् त्रिवज्रसमयैः । 6. B omits from here to निश्चारयामास below.

वितस्तिमात्रमतिक्रम्य मूर्ध्नि मण्डलकल्पना ।
ओँकारं मध्यगतं ध्यात्वा पञ्चामृतनिपातनम् ॥
अनेन वज्रयोगेन तेजस्वी भवति क्षणात् ।
कायवाक्चित्तसौस्थित्यं भवति नात्र संशयः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वमण्डल-[1] धरकायवाक्चित्तगुह्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

चैत्यकर्म न कुर्वीत न च पुस्तकवाचनम् ।
मण्डलं नैव कुर्वीत न त्रिवज्राग्रवन्दनम् ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वविषपरिहार-[2] स्तम्भनाकर्षणगुह्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ भ्रुँ ॥

चक्रमध्यगतं स्थाप्य सितांशुज्वालमालिनम् ।
पीतांशुरश्मिगहनं भावयेत् पीतसन्निभम् ।
त्रिवज्ररश्मिसमयैर्बीजोऽयं[3] गुह्यसंभवः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः कायवाक्चित्त-रक्षाचक्रमन्त्रं वज्रसंयुक्तं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

ॐ ह्रुलु ह्रुलु तिष्ठ तिष्ठ बंध बंध हन हन दह दह अमृते हूँ फट् स्वाहा ।

1. C °मन्त्र° । 2. BC °विषापहार° । 3. C बिजयं ।

भूर्जपत्रादिषु चक्रं कर्मवज्रप्रतिष्ठितम् ।
ह[1]कारमध्यगं कृत्वा[2] नाममध्ये समालिखेत् ॥
मन्त्राक्षरपदैः सम्यक् मण्डितं स्थापयेत् सदा ।
एषो हि सर्वमन्त्राणां त्रिगुह्यालयसम्भवः ॥

अथ वज्रपाणिः सर्वतथागताधिपतिः वज्राञ्जनपदं स्वकाय-वाक्चित्तवज्रेभ्यो निश्चारयामास ।

चतुष्पथैकवृक्षे च मातृस्थाने शिवालये ।
वज्राञ्जनपदं तत्र कपाले पातयेत्सदा ॥

महातैल[3]रुधिरं विष्ठं पद्मसूत्रं अर्कतूलेन[4] वर्त्तिं कृत्वा कृष्णचतुर्दश्यामर्द्धरात्रौ वज्राञ्जनं पातयेद्बुधः तत्रैवाष्टशताभिमन्त्रितं कृत्वा । त्रिविधा सिद्धिर्भवति इत्याह भगवान् समन्तभद्रः ।

अथ भगवन्तः सर्वतथागता वज्रपाणिं सर्वतथागताधिपतिमेवमाहुः । कतिभिर्भगवन् गुह्याक्षरैः समन्वागतास्ते बोधिसत्त्वा महासत्त्वा य इदं सर्वतथागतचर्यावज्रं सर्वतथागत-[5]गुह्यसमयं श्रद्धास्यन्ति भावयिष्यन्ति च ।

[6]अथ वज्रपाणिः सर्वतथागताधिपतिः तान् सर्वतथागतानेवमाह । त्रिगुह्याक्षरैर्भगवन्तः सर्वतथागताः समन्वागतास्ते बोधिसत्त्वा महासत्त्वा य इदं सर्वतथागतबोधिचर्यावज्रं श्रद्धास्यन्ति भावयिष्यन्ति च । सर्वतथागताः प्राहुः । कतमैस्त्रिभिः । वज्रधरः प्राह । यदुत सर्वतथागतकाय-

1. AR हु°, ° C हें° । 2. B ध्यात्वा । 3. C भैरवं । 4. A ° नाले ° ।
5. BC omit. 6. C omits from here to भावयिष्यन्ति च ।

वज्रेण, सर्वतथागतवाग्वज्रेण, सर्वतथागतचित्तवज्रेण, एभि-स्त्रिभिः।

अथ ते सर्वतथागता भगवतो वज्रपाणेः पादयोर्निपत्य तूष्णींस्थिता अभूवन्।

अथ वज्रपाणिः सर्वतथागताधिपतिः तान् सर्वतथागतान् बोधिसत्त्वांश्चामन्त्रयते स्म। भूतपूर्वं भगवन्तः सर्वतथागता अनभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमाः कल्पाः क्षीणा यावद् भगवतो दीपङ्करस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यातिक्रान्तस्य काश्यपस्यापि महामुनेरभिसंबुद्धस्य न भाषितम्। तत्कस्मात् हेतोः। अभव्या[1] भगवन्तः सत्त्वा अस्य महागुह्यपदार्थस्य तेन[2] कालेन तेन[3] समयेन मया न भाषितम्। अपि तु भगवन्तः सर्वतथागता अस्मिन् गुह्य-समाजे बुद्धबोधिं क्षणलवमुहूर्त्तेनैव निष्पादयन्ति। यदनेकै-र्गङ्गानदीवालुकासमैः[4] कल्पैः घटयन्तो व्यायच्छन्तो बोधि-सत्त्वा बोधिं न प्राप्नुवन्ति। तदिहैव जन्मनि गुह्यसमाजाभि-रतो बोधिसत्त्वः सर्वतथागतानां बुद्ध इति संख्यां गच्छति।

अथ ते महाबोधिसत्त्वा इदं वाग्वज्राक्षरपदं श्रुत्वा प्ररोदयामासुः। अथ ते सर्वतथागतास्तान्बोधिसत्त्वानेव-माहुः। मा भगवन्तः महाबोधिसत्त्वाः प्ररोदयत मा च विदुःखं समुत्पादयत। अथ ते महाबोधिसत्त्वास्तान् सर्वतथागतानेवमाहुः। कथं ते भगवन्तः सर्वतथागता न प्ररोदामहे। कथं न दुःखमुत्पादयामहे। तत्कस्मात्

1. B असेव्या। 2. A adds मया। 3. A omits. 4. BC ° कोपमैः।

हेतोः ? अभव्या भगवन्तः त्रिगुह्याक्षरम् । अभव्या भगवन्तोऽन्तशो नाम श्रवणेनापि । सर्वतथागताः प्राहुः । सामान्याक्षरपदं कुलपुत्रा यथा भवद्भिर्न ज्ञातं न श्रुतं तथास्माभिरपि सर्वतथागतैः सर्वबुद्धबोधिसत्त्वैश्च कुलपुत्रास्ते गुह्याक्षरा न संप्राप्ता नाभिसंबुद्धाश्च । तत्कस्मात् हेतोः ? त्रिगुह्याक्षरविशुद्धत्वात् ।

अथ ते सर्वे बोधिसत्त्वाः तूष्णीं व्यवस्थिता[1] अभूवन् । अथ भगवन्तः सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रयोषिद्भगेषु विजहार ।

अथ सा सर्वतथागतचित्तदयिता मामकी भगवन्तं सर्वतथागताधिपतिं महावज्रधरं एभिर्वज्रधरकामरतिपूजाग्राक्षरपदैः प्रीत्या संस्तूया[2]मास ।

"त्वं वज्रचित्त भुवनेश्वर सत्त्वधातो
त्रायाहि मां रतिमनोज्ञ महार्थकामैः ।
कामाहि मां जनक सत्त्वमहाग्रबन्धो
यदीच्छसि जीवितं मञ्जुनाथः ॥"

अथ सा बुद्धलोचना सर्वतथागतकायदयिता भगवन्तं सर्वतथागताधिपतिं महावज्रधरमेभिः सर्ववज्रकामरतिपूजाग्राक्षरपदैः सुखसौमनस्यप्रीत्या संस्तूयामास ।

"त्वं वज्रकाय बहुसत्त्वप्रियाङ्कचक्र
बुद्धार्थबोधिपरमार्थहितानुदर्शी[3] ।
रागेण रागसमयं[4] मम कामयस्व
यदीच्छसि जीवितं मञ्जुनाथ ॥"

1. C ° भूता । 2. C स्तुव, ° स्तनु° । 3. A° दर्भी । 4. AC ° यां, R ° ये° ।

अथ सा लोकेश्वरदयिता कायावस्थितनेत्री[1] भगवन्तं सर्वतथागताधिपतिं महावज्रधरं कामोपभोगसमयैः संस्तूयामास ॥

"त्वं वज्रवाच सकलस्य हितानुकम्पी
लोकार्थकार्य्यकरणे सह संप्रवृत्तः ।
कामाहि मां सुरतचर्य समन्तभद्र
यदीच्छसि जीवितं मञ्जुनाथ ॥"

अथ सा सर्वतथागतकायवाक्चित्तसमयवज्रदयिता भगवन्तं सर्वतथागताधिपतिं महावज्रधरमनया सर्वतथागतसुखसौमनस्यप्रीत्या संस्तूयामास ।

"त्वं वज्रकाय[2] समयाग्र महाहितार्थ
संबुद्धवंशतिलकः समता[3]नुकम्पी ।
कामाहि मां गुणनिधिं बहुरत्नभूतम्
यदीच्छसि जीवितं मञ्जुनाथ ॥"

अथ भगवान् वज्रपाणिस्तथागतः सर्वकामोपभोगवज्रश्रियं नाम समाधिं समापन्नस्तां सर्वतथागतदयितां समयचक्रेण कामयन् तूष्णीमभूत् ।

अथायं सर्वाकाशधातुः सर्वतथागतकायवाक्चित्तवज्रसमयशु[4]क्रेण परिपूर्णो वज्रोदकपरिपूर्णकुम्भ इव[5] संस्थितोऽभूत् ।

अथास्मिन्वज्राकाशधातौ ये सत्त्वास्त्रिकायसमयसंभूतास्त्रिवज्रश्रिया संस्पृष्टाः[6] सर्वे ते[7] तथागता अर्हन्तः सम्यक्संबुद्धास्त्रिवज्रज्ञानिनोऽभवन् । ततः प्रभृति सर्वसत्त्वाः समन्तभद्र

1. BC कायवाक्चित्तवज्रनेत्री । 2. BC °म । 3. C सुगता° ।
4. A च° । 5. R कुम्भेष्वव° । 6. B °ष्यस्ता: । 7. C °अथ ते सर्व° ।

[1]समन्तभद्र इति सर्वतथागतकायवाक्चित्तवज्रेणाभिषिक्ता अभूवन्।

अथ वज्रपाणिस्तथागत[2]स्तान्सर्वतथागतानेवमाह। दृष्टा भगवन्तस्सर्वतथागताः सर्वबुद्धधर्मसमता। अथ ते सर्वतथागता वज्रपाणिं सर्वतथागताधिपतिमेवमाहुः। दृष्टा[3] भगवन् दृष्टा सुगत[4] वज्रज्ञानसमता वज्रज्ञानचर्येति। अथ भगवन्तः सर्वतथागताः सर्वतथागतयोषिद्भगेष्वभिनिष्क्रम्य भगवन्तं महावज्रपाणिं सर्वतथागताधिपतिं तथागतमेवमाहुः। आश्चर्यं भगवन्नाश्चर्यं सुगत यत्र हि नाम रागाक्षरपदैः बुद्धबोधिरनुगन्तव्येति।

अथ वज्रपाणिः सर्वतथागताधिपतिस्तान्सर्वतथागतानेवमाह। मा भगवन्तः सर्वतथागता एवं वदथ। तत्कस्माद्धेतोः? खवज्रसमयतुल्यत्वात् सर्वधर्माणां न रूपस्कन्धो न वेदनास्कन्धो न संज्ञास्कन्धो न संस्कारस्कन्धो न विज्ञानस्कन्धो न धातुर्नायतनं न रागो न द्वेषो न मोहो न धर्मो नाधर्म इति।

अथ ते सर्वतथागतास्तूष्णीमभूवन्।

अथ भगवान्वज्रपाणिः तान्सर्वतथागतान्बोधिसत्त्वांश्चामन्त्रयते स्म। आलोचयन्तु भगवन्तः सर्वतथागताः सर्वलोकधातुष्विदं सर्वतथागतकायवाक्चित्तवज्रगुह्यम्। तत्कस्माद्धेतोः? भव्या बतामी दशदिक्संस्थिता बोधिसत्त्वा महासत्त्वा अस्य धर्मपर्यायस्य।

1. B adds इति। 2. BC °स्सर्वतथागताधिपति°। 3. C omits from here to तथागतमेवमाहुः below. 4. B adds सर्वतथागत before.

अथ वज्रपाणिः सर्वतथागताधिपतिः वज्रधर्म[1]मामन्त्रयते स्म। उद्गृहाण कुलपुत्र इदं सर्वतथागतसमयतत्त्वं त्वं हि सर्वतथागतैर्धर्मेश्वर वज्रगज इत्यभिषिक्तः।

अथ वज्रधर्मो बोधिसत्त्वो महासत्त्वस्तथा[2]स्त्विति कृत्वा तूष्णीमभूत्।

अथ ते भगवन्तः सर्वतथागताः त्रिवज्रतत्त्वान्तरेषु कायवाक्चित्तं प्रवेशयामासुः। अथ वैरोचनस्तथागतः सर्वत्रैधातुककायवज्रेषु विहरन् सर्वतथागतकायसमतामध्यालम्ब्य तूष्णीमभूत्। अथ वाग्वज्रः तथागतः सर्वत्रैधातुकवाग्वज्रेषु विहरन् सर्वतथागतवाक्[3]समतामध्यालम्ब्य तूष्णीमभूत्। अथ वज्रपाणिस्तथागतः सर्वत्रैधातुकचित्तवज्रेषु विहरन् सर्वतथागतचित्तसमता[4]मध्यालम्ब्य तूष्णीमभूत्।

इदमवोचत् भगवान्।

इति सर्वतथागतकायवाक्चित्तगुह्यरहस्यातिरहस्ये श्रीगुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतसमयसम्बरवज्राधिष्ठानपटलः सप्तदशोऽध्यायः।

1. BC °पाणि°। 2. A एवम°। 3. A वाग्वज्र°। 4. C °दयिता°।

अष्टादशः पटलः।

अथ खलु मैत्रेयप्रभृतयो महाबोधिसत्त्वाः सर्वतथाभिषिक्त-कायवाक्चित्तगुह्यनिर्देशं सर्वभावेन यथावद् यथासमयं दृष्ट्वा श्रुत्वा चाधिगम्य तान् सर्वतथागतान् हृष्टधार्मिकानेवमाहुः।

अहो समन्तभद्रस्य कायवाक्चित्तनिर्णयः।
विहरन्ति त्रिवज्रेण त्रिवज्रेषु समन्ततः॥
सर्वसत्त्वाः समुत्पन्नास्त्र्यध्व[1]वज्रस्वभावतः।
बोधिवज्रपदं प्राप्ता बुद्धवज्रमहर्धिकाः॥
अहो सुविस्मयमिदमहो शान्तमतीन्द्रियम्।
अहो परमनिर्वाणमहो संसारसन्ततिः॥

ततस्ते सर्वतथागतास्तान् बोधिसत्त्वान् महासत्त्वानेवमाहुः। एवमेव[2] बोधिसत्त्वा एवमेव[3] महा[4]सत्त्वा इति।

अथ ते सर्वे बोधिसत्त्वा महासत्त्वाः पुनः समाजमागम्य तान्-सर्वतथागतान् गुह्येतरपूजाभिः संपूज्य प्रणिपत्यैककण्ठेनैव[5]माहुः।

अहो सुदुर्लभमिदमुपायं बोधिसाधनम्।
तन्त्रं गुह्यसमाजाख्यं तन्त्राणामुत्तरोत्तरम्॥
अध्येषयामस्त्वां नाथ यदुक्तं भूतवादिना।
तद्गूढाव[6]बोधनार्थाय सत्त्वानां हितकाम्यया॥

अथ ते सर्वतथागतास्तान् बोधिसत्त्वानेवमाहुः।

साधु साधु महासत्त्वाः साधु साधु गुणाकराः।
यत् सुगूढपदं तन्त्रे[7] तत्सर्वं पृच्छतेच्छया॥

1. A अथ। 2. AR महाबो°। 3. C omits. 4. AR बोधि°। 5. B कण्ठेव। 6. BC °ढा°। 7. B °न्त्रं।

अथ ते—

सर्वे महाबोधिसत्त्वाः प्रहर्षो[1]त्फुल्ललोचनाः ।
पृच्छन्तीह स्वसन्देहान् प्रणिपत्य मुहुर्मुहुः ॥
गुह्ये त्यत्र[2] किमुच्येत समाजेति किमुच्यते ।
कीदृशस्तत्र[3] सम्बन्धः योगेत्यत्र किमुच्यते ॥
तत्त्वं कतिविधं प्रोक्तं गुह्यं कतिविधं तथा ।
रहस्येति किमुच्येत परमं कतिविधं भवेत् ॥
बोधिचित्तेति किं ज्ञेयं विद्यापुरुषेति किं तथा ।
वज्रधृगिति किं ज्ञेयं जिनजिगिति किं तथा ॥
रत्नधृगिति किं तत्र आरोलिगिति किं तथा ।
प्रज्ञाधृगिति किं ज्ञेयं कुलमित्यत्र किं तथा ॥
मोह इति किमुच्येत द्वेषेत्यत्र किमुच्यते ।
राग इति किमुच्येत वज्रमत्र किमुच्यते ॥
रतीत्यत्र किमुच्येत कथं सम्पदिति स्मृतम् ।
यमान्तकृत् किमर्थेन किन्तत् प्रज्ञान्तकृत्त[4]था ॥
पद्मान्तकृत् कथं नाम कथं विघ्नान्तकृत्त[5]था ।
समन्त[6]चर्येति किं ज्ञेयं मन्त्रचर्येति किं तथा ॥
जपमित्यत्र किं ज्ञेयं किमा मुद्र[7]ामुच्यते ।
धर्मोदयं कथं भाव्यं सम्बरं कीदृशं तथा ॥
द्वेषमोहमहारागैः सत्त्वार्थं कुरुते कथम् ।
मण्डलेति किमुच्येत मुद्रान्यासं कथं भवेत् ॥

1. AR °र्षितो° । 2. A गुह्यतंत्र, C गुह्येह्यत्र । 3. AR तन्त्र । 4. R °कं । 5. R °कं । 6. AR सर्वमन्त्र° । 7. A °द्रे° ।

पुष्पमित्यत्र किं ज्ञेयं चैत्यं चेति किमुच्यते ।
ज्ञानचक्रं कथं ज्ञेयं पद्मम किमुच्यते ॥
चोदनं च कथं नाथाः प्रेरणं च कथं भवेत् ।
आमन्त्रणं कथं तेषां बन्धनं कथमत्र वै ॥
अभिषेकं कथं देयं कथं विद्याव्रतं तथा ।
पञ्चामृतं कथं भक्ष्यं पञ्चवीर्यं कथं तथा ॥
[1]कीदृशं सिद्धिसामान्यमुत्तमं कीदृशं तथा ।
उपायाः कतिविधास्तत्र उपेयः[2] कीदृशस्तथा ॥
कथमाज्ञां प्रयच्छन्ति योगिनः सर्ववज्रिणाम् ।
कथं कुर्वन्ति नानात्वं[3] तत्सर्वं कथयाशु च[4] ।

अथ ते सर्वतथागतास्तेषां बोधिसत्त्वानां महासत्त्वानां प्रश्नवाक्यमुपश्रुत्य मुहूर्तं महाबोधिसत्त्वं महावज्रधर[5]मालम्ब्य तूष्णीमभूवन् । अथ ते—

सर्वे महाबोधिसत्त्वाः प्रहृष्टाः करुणात्मनः ।
संबुद्धान् सुगतान् नाथान् प्रचोदन्ति[6] पुनः पुनः ॥

अथ ते सर्वतथागतास्तान्बो[7]धिसत्त्वानेवमाहुः ।

कायवाक्चित्तवज्रेण कायवाक्चित्तवज्रिणः ।
सत्त्वार्थं[8] बोधिसत्त्वेन्द्राः[9] शृण्वन्तु प्रश्नविस्तरान्[10] ॥

अथ ते सर्वे महाबोधिसत्त्वास्तेषां सर्वतथागतानामनुग्रह-वचनमुपगृह्य[11] महाबोधिसत्त्वस्य महावज्रधरस्य कायवाक्-

1. BC omit this line. 2. BC ° उपायं। 3. BC समयं। 4. AR कर्माग्रप्रसराणि च। 5. BC omits महावज्रधर °। 6. A ° दयन्ति। 7. BC महाबो °। 8. BC समुच्चार्य। 9. B ° सेन्द्राः। 10. BC शृणु गुह्य-मविस्तारम। 11. BC परमगुह्यवचनमुपश्रुत्य, R प्रगृह्य।

चित्तवज्रं स्वकायवाक्चित्तवज्रैरालम्ब्य[1] साधु साधु भगवन्तः साधु साधु सुगता[2] इति तूष्णीमभूवन्।

[3]ततस्ते सर्वतथागता महाकरुणात्मानः सद्ध्यालम्ब्याधितिष्ठन् तेषां महाबोधिसत्त्वानामेककण्ठेनैव तान् प्रश्नान्[4] निर्दिशन्ति स्म[5]।

विविधं कायवाक्चित्तं गुह्यमित्यभिधीयते।
[6]समाजं मीलनं प्रोक्तं सर्वबुद्धाभिधानकम्॥
पंचमं[7] नवमं चैव दश सप्त त्रयोदशम्[8]।
बुद्धानां बोधिसत्त्वानां देशना साधनं महत्॥
चतुर्थं षोड़शं चैव अष्टमं द्वादशं तथा।
आचार्यकर्मसामान्यं[9] सिद्धिश्च व्रतसम्बरम्॥
अष्टमं च[10] द्वितीयं च दश पञ्च चतुर्दशम्॥
हठमनुरागणं चैव उपसाधनसम्बरम्।
सप्तमं च तृतीयं च दशैकादशपञ्चमम्[11]॥
सिद्धिश्चैवनिमित्तं च सेवा[12]साधनसम्बरम्।
सर्वतथागतकर्म निग्रहानुग्रहक्षमम्॥
दान्तदौर्दान्तसौम्यानां सत्त्वानामेव तारणम्[13]॥
उत्पत्तिक्रमसंबन्धं[14] सेवावज्रविधिश्चतुः॥

1. BC वज्रवाक्यैः साधुकारमददुः। 2. BC सर्वतथागता। 3. C omits from ततः......दश सप्त त्रयोदशम् below. 4. B has instead सर्वे मिलित्वा एकमतेनैकस्वरेण। 5. B adds अथ ते सर्वतथागतास्तेषां बोधिसत्त्वानां महासत्त्वानां प्रश्नवाक्यमुपश्रुत्य सुहृत्तं महाबोधिसत्त्वं वज्रधरमालम्ब्य उवाच। 6. B omits this line. 7. B अष्टमं। 8. B दशमं तत्र षोडशं। 9. B वर्णनं नाम, C वर्णनामन्यं। 10. B सप्तमं, C षष्ठं चैव। 11. BC सेवासाधनमुत्तमम्। 12. A सत्त्व °। 13. AR ° मवतारणा। 14. B क्रमशं चैव।

गुरूणां मन्त्रमार्गेण[1] शिष्याणां परिपाचनम्।
सुव्रतस्याभिषिक्तस्य सुशिष्यस्य महात्मनः।
बुद्धानां बोधिसत्त्वानां देशना परिमोचना॥
प्रज्ञोपायसमापत्तिर्योग इत्यभिधीयते।
योनिस्वभावतः[2] प्रज्ञा उपायो भावलक्षणम्॥
प्रबन्धं तन्त्रमाख्यातं तत् प्रबन्धं त्रिधा भवेत्।
आधारः प्रकृतिश्चैव असंहार्यप्रभेदतः॥
प्रकृतिश्चाकृतेर्हेतुरसंहार्यफलं तथा।
आधारस्तदुपायश्च त्रिभिस्तन्त्रार्थसंग्रहः॥
पञ्चकं त्रिकुलं चैव स्वभावैकशतं कुलम्[3]।
सहोक्तिर्बोधिवज्रस्य सोत्तरं तन्त्रमिष्यते॥
तत्त्वं पञ्चकुलं प्रोक्तं त्रिकुलं गुह्यमुच्यते।
अधिदेवो रहस्यं च परमं शतधा कुलम्॥
अनादिनिधनं शान्तं भावाभावाक्षयं विभुम्।
शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम्॥
कायवाक्चित्तवज्रेण[4] भेद्याभेद्यस्वभावतः[5]।
विद्यया सह संयुक्तो विद्यापुरुष उच्यते॥
पञ्च हेतिश्च वेतिश्च[6] वज्रमित्यभिधीयते।
धारणं धृगिति ख्यातं विज्ञानं वज्रधृङ्मनः॥
सदसन्मध्यमं ख्यातं भूतभौतिकसम्भवम्।
विग्रहः सर्वसत्त्वानां जिनजिग्जननं जिनः॥

[1] A °मामन्त्र। [2] BC याभिः सन्तिष्ठते। [3] C °वैकं कुलं तथा।
[4] B °वज्राणां। [5] AB भेद्यतेयं स्वभावतः। [6] A चे°।

